[मालासूत्रविधानं सूत्रमण्यादिसंस्कारश्च]

कार्पासतन्तुना चैव निर्मितं ग्रन्थिवर्जितम् ।
त्रिगुणं त्रिगुणीकृत्य गणत्रयसमन्वितम् ॥ ५४ ॥

प्रक्षाल्य पञ्चगव्येन तत्सूत्रं परिपूजयेत् ।
श्रीवृक्ष[1]पर्णैर्नवभिः पद्माकारेण कल्पयेत् ॥ ५५ ॥

सूत्रं मणींश्च गन्धादीन् [2]कल्पितां तत्र निक्षिपेत् ।
तारं शक्तिं मातृकां च सूत्रे चैव मणौ तथा ॥ ५६ ॥

विन्यस्य पूजयेत्तत्र जुहुयाच्चैव मन्त्रतः ।

[मणीनां सूत्रे योजनक्रमादिकम्]

मणिमेकैकमादाय सूत्रे तत्रैव योजयेत् ॥ ५७ ॥

मुखं मुखेन संयोज्य पृष्ठं पृष्ठेन योजयेत् ।
(प्रोक्तसङ्ख्यान्यमेकाक्षं मेरुत्वेना[3]त्र विन्यसेत् ॥ ५८ ॥

एकैकमणिमध्ये तु ग्रन्थिं तत्र प्रकल्पयेत्[4] ।)
अन्योन्या[5]घर्षसिध्यर्थं घर्षो जपविनाशकृत् ॥ ५९ ॥

मणौ यदुन्नतं स्थानं मुखं पृष्ठं तु निम्नकम् ।
कमलाक्षस्य सूक्ष्मांशं [6]सबिन्दु द्वितयं मुखम् ॥ ६० ॥

सबिन्दुकं च स्थूलांशं पृष्ठभाग इति स्मृतम् ।
एवं ज्ञात्वाऽऽननं पृष्ठं मणिं सूत्रे निवेशयेत् ॥ ६१ ॥

---

1. वर्णै-वी. क्रि.
2. कपिलां-ग.
3. परिकल्पयेत्-मु.
4. अयं धनुरङ्कितो भागः "वी. क्रि.", कोशे नास्ति ।
5. नध्य-वी. क्रि.
6. संविदु-वी. क्रि.

[अक्षमालासंस्कारः संस्कृतायास्तस्या जपे प्राशस्त्यं ततो फलविशेषाश्च]

कृत्वैवमथ संस्कारं यथाविधि समाचरेत् ।
प्रक्षाल्य पञ्चगव्येन तथा पञ्चामृतेन च ॥ ६२ ॥

संस्नाप्य तीर्थतोयेन शिवकुम्भस्थितेन च ।
सकृच्च मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः ॥ ६३ ॥

धूपदीपनिवेद्यादि दत्वा चाष्टशतं न्यसेत् ।
मूलमन्त्रजपात्पश्चाद्दण्डवत्प्रणमेद्बुधः ॥ ६४ ॥

एवं या संस्कृतामाला जपकर्मणि सर्वदा ।
अभीष्ट[1]दा सदाऽत्यर्थं सा सर्वाघविनाशिनी ॥ ६५ ॥

[जपविधावक्षमालामणिस्पर्शेऽङ्गुलिनियमः]

मध्यमानामिकाङ्गुष्ठैरक्षमालामणिं स्पृशेत् ।
मध्यमायां न्यस्तमालां ज्येष्ठेनावर्तयेत्क्रमात् ॥ ६६ ॥

[जपेऽङ्गुष्ठादीनां पृथक्फलभेदोऽङ्गुष्ठप्राशस्त्यं च]

अङ्गुष्ठेन तु मोक्षाय तर्जनी शत्रुनाशिनी ।
मध्यमा धनदा शान्तिं करोत्येषा ह्यनामिका ॥ ६७ ॥

कनिष्ठा रक्ष[2]णी शस्ता जपकर्मणि शोभना ।
अङ्गुष्ठेन जपेज्जप्यं मध्यैरङ्गुलिभिः सह ॥ ६८ ॥

अङ्गुष्ठेन विना कर्म कृतं यदफलं भवेत् ।

[फलभेदेन जपसङ्ख्याभेदः जपानन्तरं मालास्थापनक्रमश्च]

मोक्षार्थं पञ्चविंशत्या पौष्टिके सप्तविंशतिः ॥ ६९ ॥

---

1. फलदा–वी. क्रि.
2. णे–वी. क्रि.

त्रिंशच्च धनसंपत्त्यै पञ्चदश्याभिचारिके ।
जप्त्वाऽक्षमालां सकलां भ्रामयेच्च शिखामणिम् ॥ ७० ॥
प्रदक्षिणं पुनर्वक्तुं प्रारभ्यैवं समाचरेत् ।

[अक्षमालायाः पावित्र्यकथनम्]

स्वयं वामेन हस्तेन जपमालां न संस्पृशेत् ॥ ७१ ॥
न धारयेत्करे मूर्ध्नि कण्ठे च जपमालिकाम् ।
जपकाले जपं कृत्वा सदा शुद्ध[1]स्थले क्षिपेत् ॥ ७२ ॥

[जपमालायाः अलाभे अङ्गुलिपर्वभिरङ्गुलिभिर्वा गणना]

अलाभे जपमालायाः करशाखासु पर्वभिः ।
[2] मध्याङ्गुल्यग्रपर्वादिप्रादक्षिण्यक्रमेण तु ॥ ७३ ॥
अथवा करशाखाभिर्जप्तव्यो जापकैर्जपः ।

[अङ्गुलिपर्वगणनाक्रमः]

तत्राङ्गुलीजपं कुर्वन् [3] साङ्गुष्ठाङ्गुलिभिर्जपेत् ॥ ७४ ॥
मध्यमानामिकामध्यपर्वद्वितय[4]संयुतम् ।
मेरुं प्रदक्षिणीकु[5]र्वन्ननामामूलपर्वतः ॥ ७५ ॥
आरभ्य मध्यमामूलपर्वान्तं गणनाक्रमात् ।
[6] अङ्गुलीजप[7]सङ्ख्यानामेकमेकमुदाहृतम् ॥ ७६ ॥

---

1. जले–मु.
2. मध्यमाङ्गु–वी. क्रि.
3. स्वाङ्गु–वी. क्रि.
4. कल्पितम्–ग.
5. कृत्य नना–वी. क्रि.
6. अङ्गुल्या–वी. क्रि. ख.
7. सङ्ख्येव–वी. क्रि.

[जपसङ्ख्याने रेखादीनामुत्तरोत्तरं फलाधिक्यम्]

रेखयाऽष्टगुणं [1] विद्यात्पुत्र ! जीवैर्दशाधिकम् ।
शतं स्याच्छङ्खमणिभिः प्रवालैस्तु सहस्रकम् ॥ ७७ ॥
स्फाटिकैर्दशसाहस्रं मौक्तिकै[2]र्लक्षमुच्यते ।
दशालक्षं च पद्माक्षैः सौवर्णैः कोटिरुच्यते ॥ ७८ ॥
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत् ।

[प्रदक्षिणनमस्कारजपेषु गणनाया आवश्यकता]

प्रदक्षिणनमस्कारौ जपश्चेति त्रयोऽपि च ॥ ७९ ॥
सङ्ख्याहीनं कृतं सर्वं राक्षसेभ्यः समर्पितम्[3] ।
अतश्च सङ्ख्यया विद्वान् जपेत्तत्फलसिद्धये ॥ ८० ॥
जपमालाविधिस्त्वेवं प्रोक्तः कमलसंभव ! ।

[शिवध्यानम्]

एवं जपन् शिवं ध्यायेद्धृदये जगदीश्वरम् ॥ ८१ ॥

[ध्यानद्वैविध्यम्]

शिवध्यानं द्विधा प्रोक्तं सगुणं निर्गुणं तथा ।

[सगुणध्यानम्]

आदौ सगुणमाश्रित्य पश्चान्निर्गुणमाश्रयेत् ॥ ८२ ॥

---

1. प्रोक्तं–वी. क्रि., विन्द्या–ख.
2. दश कथ्यते–ग.
3. इतः परं मुद्रितग्रन्थे अयमधिको भागः—
   मन्त्रहीना च या पूजा यच्च दानं विनोदकम् ।
   असङ्ख्यातं तु यजन्मं तत्सर्वं निष्फलं स्मृतम् ॥

हृत्पद्मं शिवधर्मकन्दसहितं सुज्ञाननालं तथा
नित्यैश्वर्यदलाष्टकं शशिनिभं वैराग्यसत्कर्णिकम् ।
श्रीरुद्राञ्चितकेसरान्वितमिदं सञ्चिन्त्य तन्मध्यमे
सूर्येन्दूज्ज्वलवह्निमण्डलगतं ध्यायेच्छिवं चिन्मयम् ॥ ८३ ॥

प्रसन्नवदनं शान्तं द्व्यष्टवर्षीयमुज्ज्वलम् ।
अनेककोटिकन्दर्पलावण्यसमविग्रहम् ॥ ८४ ॥

चतुर्भुजं मृगीटङ्कवरदाभयपाणिकम् ।
चन्द्रलेखावरोत्तंसं शरच्चन्द्रायुतद्युतिम् ॥ ८५ ॥

दिव्याम्बरधरं देवं दिव्यगन्धानुलेपनम् ।
दिव्याभरणशोभाढ्यं दिव्यपुष्पैरलङ्कृतम् ॥ ८६ ॥

त्रिनेत्रं त्रिगुणाधारं त्रिमलक्षयकारणम् ।
सर्वमङ्गलया देव्या निजवामाङ्कशोभितम् ॥ ८७ ॥

भास्वत्कल्पतरोर्मूले फलपु[1]ष्पसमन्विते ।
वेदिकायां सुखासीनं नवरत्नमयासने ॥ ८८ ॥

परं शिवं हृदि ध्यायेन्निश्चलीभूतमानसः ।

[जपे आसनभेदाः तेषां फलभेदश्च]

धरण्यां सुखसंपत्तिर्दौर्भाग्यं दारुकासने ॥ ८९ ॥

तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ।
अभिचारादिके नीलं रक्तं वश्यादिके भवेत् ॥ ९० ॥

वस्त्रासने दरिद्रः स्यात् पाषाणे व्याधि[2]पीडनम् ।
दर्भासने तपोवृद्धिः प्रजावृद्धिश्च रत्नके ॥ ९१ ॥

---

1. पुष्पैरलङ्कृते–मु.
2. डितम्–ग.

सर्वान् कामानवाप्नोति मनुष्यः कम्बलासने ।
कृष्णाजिने भवे[1]ज्ज्ञानं मोक्षश्रीः व्याघ्रचर्मणि[2] ॥ ९२ ॥

[प्रशस्तासनोपवेशादिमुखेनेष्टलिङ्गपूजा]

एतेष्वेकं समास्थाय प्रशस्ततरमासनम् ।
धृत्वा विभूतिं सर्वाङ्गैः[3]धृत्वा रुद्राक्षमालिकाम् ॥ ९३ ॥
जप्त्वा पञ्चाक्षरीमन्त्रं ततो लिङ्गं प्रपूजयेत्[4] ।

इति शिवतत्त्वरत्नाकरेऽष्टमकल्लोले रुद्राक्षधारणविधि-
जपविधिवर्णनं नाम षष्ठस्तरङ्गः

—o—

---

1. न्मुक्तिः–ग.
2. इतःपरं मुद्रितग्रन्थे अयमधिको भागः—
"कृष्णाजिनं तु यत्नेन वर्जयेत् पुत्रवान् गृही" ।
3. कृत्वा–ग.
4. इतःपरं "एवं नित्यं कर्म कृत्वा ततो विद्यां विचिन्तयेत्" इत्यर्धं मुद्रितग्रन्थे अधिकं वर्तते ।

## अष्टमकल्लोले सप्तमस्तरङ्गः

—o—

[कुमारस्य शिवपूजाविधिप्रश्नः महीपालस्य तदुत्तरकथनप्रतिज्ञा च]

(कीर्तितं भस्मनश्चैव रुद्राक्षाणां च वैभवम् ।
तद्धारणे च नियमो जपस्यापि विधिस्तथा ॥ १ ॥

प्रधानाङ्गानि मेधायां एतान्युक्तानि साम्प्रतम् ।
शिवपूजाविधिं स्वामिन्! ब्रूहि मे करुणावशात् ॥ २ ॥

पुत्र! ते महिता बुद्धिर्यत्पृच्छसि शिवार्चनम् ।
शृणु तत्कथयिष्यामि यज्ज्ञातुं त्वमिहेच्छसि [1] ॥ ३ ॥)

[इष्टलिङ्गपूजाफलम्]

यदेव गुरुणा दत्तमिष्टलिङ्गं [2] विधारितम् ।
सज्जिका स्थापितं तत्तु भक्तियुक्तः प्रपूजयेत् ॥ ४ ॥

यस्तु [3] पूजयते लिङ्गं नित्यं त्रिभुवनेशितुः ।
स स्वर्गमोक्ष[4]भाग्यस्य नित्यं भवति भाजनम् ॥ ५ ॥

[विष्ण्वादीनां लिङ्गपूजयैव विष्णुत्वादिप्राप्तिः]

इन्द्रनीलमयं लिङ्गं विष्णुरर्चयते सदा ।
विष्णुत्वं प्राप्तवांस्तेन साद्भुतैकं सनातनम् ॥ ६ ॥

---

1. अयं धनुरङ्कितो भागः 'ख' प्रतौ नास्ति ।
2. पधारितम्–ख.
3. संपूजयेल्लिङ्गं–मु.
4. दाद्य–ख.

ब्रह्मा पूजयते नित्यं लिङ्गं चैव शिलामयम् ।
तस्य संपूजनात्तेन प्राप्तं ब्रह्मत्वमुत्तमम् ॥ ७ ॥

शक्रोऽपि देवराजेन्द्रो लिङ्गं मणिमयं शुभम् ।
[1]भक्त्या पूजयते नित्यं तेन शक्रत्वमाप्तवान् ॥ ८ ॥

लिङ्गमन्नमयं [2]नित्यमग्निर्यजति भावितः ।
अग्नित्वं प्राप्तवांस्तेन तेजोभूत[3]मनिन्दितम् ॥ ९ ॥

स्फाटिकं निर्मलं लिङ्गं वरुणोऽर्चयते सदा ।
तेन तद्वरुणत्वं हि प्राप्तं बुद्धिबलान्वितम् ॥ १० ॥

वायुः पूजयते भक्त्या लिङ्गं पित्तलजं शुभम् ।
वायुत्वं तेन संप्राप्तमनौपम्यगुणान्वितम् ॥ ११ ॥

लिङ्गं हेममयं पूतं धनदोऽर्चयते सदा ।
तेनासौ धनदो देवो धनदत्वमवाप्तवान् ॥ १२ ॥

ताम्रं लिङ्गं सदाकालं भक्त्या देवो दिवाकरः ।
यजते विधिवत्तेन प्राप्तं सूर्यत्वमुत्तमम् ॥ १३ ॥

मुक्ताफलमयं लिङ्गं सोमः पूजयते सदा ।
तेन सोमोऽपि संप्राप्तः सोमत्वं सततोज्ज्वलम् ॥ १४ ॥

विश्वेदेवा महात्मानो रौप्यलिङ्गं मनोहरम् ।
यजन्ते विधिवद्भक्त्या तेन विश्वत्वमाप्नुयुः ॥ १५ ॥

वसवः कांस्यजं [4]लिङ्गं पूजयन्ति विधानतः ।

---

1. शैवं–मु., लिङ्गं–ग.
2. पुण्यमग्नि–ग.
3. समन्वितम्–ग.
4. लिङ्गं तु–मु.

प्राप्तवन्तो महात्मानो वसुत्वं सुमहोदयम् ॥ १६ ॥
अश्विनौ पार्थिवं लिङ्ग[1]मर्चयन्तौ विधानतः ।
तेन तावश्विनौ देवौ दिव्यदेहं गतावुभौ ॥ १७ ॥
सर्वलोहमयं लिङ्गं यजन्ते मातरः सदा ।
[2]मातृत्वं प्राप्नुयुस्तेन सर्वलोकेषु दुर्लभम् ॥ १८ ॥
कृष्णायसमयं लिङ्गं पूजयन्त्यसुरोत्तमाः ।
राक्षसाश्च महात्मानस्तेन तेऽमितविक्रमाः ॥ १९ ॥
त्रपु सीसमयं लिङ्गं पिशाचाः पूजयन्ति ते ।
दिव्यैश्वर्यसमायुक्ताः प्रयान्ति परमं पदम् ॥ २० ॥
[3]त्रिलोहकमयं लिङ्गं यजन्ते गुह्यकादयः ।
तेन योगबलोपेताः प्रयान्ति परमं पदम् ॥ २१ ॥
प्रवालरचितं लिङ्गं यजन्ते पन्नगोत्तमाः ।
तेन नागाः सुभोगाढ्याः प्राप्तास्ते परमं पदम् ॥ २२ ॥
एवं देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
पूजयन्ति सदाकालमीशानं सुरनायकम् ॥ २३ ॥

[शिवपूजाफलम्]

ये अर्चयन्ति महाभोगान् राज्यं वा त्रिदशालयम् ।
तेऽर्चयन्ति सदा भक्त्या हरस्य चरणाम्बुजम् ॥ २४ ॥
विद्या रूपं धनं सौख्यं सत्कुलं हीनरोगता ।
[4]स्वर्गवैराग्यमोक्षाश्च शिवपूजाविधेः फलम् ॥ २५ ॥

1. ङ्ग यजन्तौ-ख. मु.
2. प्रापुस्तांस्तेन मातृत्वं-मु.
3. लोहत्रयम-मु.
4. राज्यं स्वर्गश्चमो-ख.

[शिवपूजायाः अकरणे प्रत्यवायः]

(यो न पूजयते मोहाल्लिङ्गं त्रिभुवनेशितुः ।
[1]स च स्वर्गस्य मोक्षस्य [2]वैराग्यस्य न भाजनम्[3]) ॥ २६ ॥

[लिङ्गपूजाधिक्यं लिङ्गे शिवसान्निध्यं च]

यो ददाति गवां लक्षं दोग्ध्रीणां वेदपारगे ।
[4]एकाहमर्चयेल्लिङ्गं तस्य पुण्यं ततोऽधिकम् ॥ २७ ॥

(येऽर्चयन्ति सदा [5]रुद्रं न ते प्राकृतमानुषाः ।
रुद्रलोकात्परिभ्रष्टास्ते रुद्रा नात्र संशयः[6]) ॥ २८ ॥

पाप[7]हा सर्वमर्त्यानां दर्शनात्स्पर्शनादपि ।
तस्मादेकमना भूत्वा यावज्जीवप्रतिज्ञया ॥ २९ ॥

शिवपूजाविधिं कुर्याद्यदीच्छेद्भूतिमात्मनः ।
लिङ्गे [8]देवो महादेवः साक्षा[9]देव व्यवस्थितः ॥ ३० ॥

अनुग्रहाय लोकानां तस्माल्लिङ्गं प्रपूजयेत् ।
हन्यात्क्रुद्धोपि चाकाशं क्षुधा[10]र्तः [11]खादयेत्तु[12]षान् ॥ ३१ ॥

---

1. न–मु.
2. नराज्यस्य–ग.
3. अयं धनुरङ्कितो भगाः 'ख' कोशे नास्ति ।
4. सकृल्लिङ्गार्चद्धीमान् भजेत्–मु. पा.
5. शम्भुं–मु.
6. अयं धनुरङ्कितो भागः 'ख' कोशे नास्ति ।
7. ग्रास्स–मु.
8. सदाशिवो–मु.
9. न्नित्यं–मु., द्दे–ख.
10. र्थी–ख.
11. खादते–ख.
12. च्छिलाः–मु.

[प्रतिमार्चनतोऽपि लिङ्गार्चनाधिक्यम्]

त्यक्त्वा लिङ्गार्चनं मूढो मुक्त्यर्थी त्रितयं वृथा ।
यत्पुण्यं प्रतिमार्चायां [1] युगकोटिशतैरपि ॥ ३२ ॥
तत्फलं लभते मर्त्यो लिङ्गे तु घटिकार्धके ।
(नियमाद्यस्तु कुर्वीत भक्तिं वा द्रोहमेव वा ॥ ३३ ॥
तस्यापि च प्रसन्नोऽसौ फलं यच्छति वाञ्छितम् [2] ।)
रुद्धं किञ्चित्समादाय क्षुल्लकं जलमेव वा ॥ ३४ ॥
यो दत्ते नियमेनासौ तस्मै दत्ते जगत्त्रयम् ।

[चन्दनादीनां शिवप्रीतिकरत्वं वन्यफलादौ विशेषश्च]

[3] चन्दनं बिल्वकाष्ठं च पुष्पाणि वनजान्यपि ॥ ३५ ॥
फला[4]नि तादृशान्येव [5] यस्य प्रीतिकराणि वै ।
वन्येषु यादृशी प्रीतिः वर्तते परमेशितुः ॥ ३६ ॥
उत्तमेष्वपि नास्त्येव तादृ[6]शी ग्रामजेष्वपि ।

[लिङ्गपूजायां कालदेशाद्यनपेक्षा:]

न कालनिय[7]मस्तत्र न देशस्य स्थलस्य च ॥ ३७ ॥
यत्रास्य चित्तं रमते तत्र ध्यानेन केवलम् ।

---

1. कल्प–मु. पा.
2. अयं धनुरङ्कितो भागः 'ख' कोशे नास्ति ।
3. 'चन्दनं बिल्वकाष्ठं च' इत्यारभ्य 'स्कन्देनैते महात्मना' (श्लो. ७८) इत्यन्तं 'ख' कोशे नास्ति ।
4. यारण्यका–मु.
5. त–मु.
6. क्षु–मु.
7. माद्यत्र–ग.

[स्वात्मनि शिवैक्यभावनायां विशेषः]

स्वात्मन्येव शिवे[1]त्येवं शिवसायुज्य[2]माप्नुयात् ॥ ३८ ॥

[राजशिवयोः सोऽहंभावनायां विशेषः]

अतिस्वल्पतरायुः श्रीभूतेशांशाधिपो हि यः ।
स तु राजाहमस्मीति वादिनं हन्ति सान्वयम् ॥ ३९ ॥
कर्तापि सर्वलोकानां [3] महदैश्वर्यवानपि ।
शिवः शिवोहमस्मीति वादिनं यश्च कश्चन ॥ ४० ॥
आत्मना सह तादात्म्याद्भागिनं कुरुते भृशम् ।

[उपचारभेदाः तेषां गृह्योदितत्वं च]

उपचारानथो वक्ष्ये पुराणश्रुतिसम्मतान् ॥ ४१ ॥
उपचारास्त्रयः प्रोक्ताः पञ्चाष्टौ दश षोडश ।
द्वात्रिंशच्च चतुर्विंशत्युपचारा गृह्योदिताः ॥ ४२ ॥

[उपचारत्रयः]

स्नानं पूजा च नैवेद्यमुपचारास्त्रयः स्मृताः ।

[पञ्चोपचाराः]

प्रदक्षिणनमस्कारौ पञ्चैते सम्प्रकीर्तिताः ॥ ४३ ॥

[अष्टावुपचाराः तेषां ब्रह्मप्रोक्तता च]

पार्थिवाद्यैश्च सद्यादिपञ्चमन्त्रैः समर्चनम् ।
पञ्चोपचारमित्युक्तं ब्रह्मणा परमेष्ठिना ॥ ४४ ॥

---

1. प्येवं-मु.
2. कारणम्-मु.
3. सुमहैश्च-मु.

सङ्गीतवाद्यनृत्तैस्तैरुपचाराष्टकं मुने! ।

[दशोपचाराः]

अर्घ्यं पाद्यं चाचमनं मधुपर्काचमौ तथा ॥ ४५ ॥
[1]गन्धादयो निवे[2]द्यान्ता उपचारा दश क्रमात् ।

[षोडशोपचाराः]

अवाहनासने पाद्यमर्घ्यमाचमनीयकम् ॥ ४६ ॥
स्नानमाचमनं वस्त्रं तथा चामोपवीतके ।
आचामो गन्धपुष्पे च धूपदीपनिवेदनम् ॥ ४८ ॥
प्रदक्षिणनमस्कारावात्मन्यारोपणं ततः ।
उपचाराः षोडशोक्ताः स्कन्देनैते महात्मना ॥ ४८ ॥

[चतुर्विंशत्युपचाराः]

आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ।
स्नानं वस्त्रं चोपवीत[3]मक्षतागन्धपुष्पकम् ॥ ४९ ॥
(धूपं दीपं च नैवेद्यं फलं ताम्बूलकं स्तुतिः ।
प्रदक्षिणनमस्कारौ शय्यासङ्गीतवाद्यकम् ॥ ५० ॥
नृत्तं चात्मारोपणं च चतुर्विंशतिरित्यमी ।

[द्वात्रिंशदुपचाराः]

आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ॥ ५१ ॥

---

1. स्नानादयो–मु.
2. दन्ता- मु.
3. भूषणं चानुलेपनम्–ख.

स्नानं वस्त्रं चोपवीतं भूषणं चानुलेपनम्[1] ।
तिलाक्षताः पुष्पधूपदीपनैवेद्यकानि च)[2] ॥ ५२ ॥
मुखवासननीराजदर्पणं च[3] फलानि च ।
प्रदक्षिणं च ताम्बूलं नमस्कारः स्तुती तथा ॥ ५३ ॥
पुराणपठनं छत्रं व्यजनं चामरं तथा ।
शय्यासङ्गीतनृत्तं च वाद्यानि च ततः परम् ॥ ५४ ॥
अत्मन्यारोपणं चेति द्वात्रिंशदुपचारकाः ।

[आवाहनादि बाह्योपचाराः तेषां प्रत्येकं फलानि च]

आवाहनं च यः कुर्यात्स तु क्रतुफलं[4] लभेत् ॥ ५५ ॥
आसनं रुचिरं दत्वा शक्रत्वं समवाप्नुयात् ।
पाद्येन पातकं हन्यादर्घ्येणाप्नोत्यनर्घताम् ॥ ५६ ॥
ततश्चाचमनं दत्वा शुचित्वं[5] सुखितां व्रजेत् ।
स्नानं विधिभयं हन्याद्वस्त्रमायुष्यवर्धनम् ॥ ५७ ॥
[6] उपवीतं तु यो दद्याद्ब्रह्मवेत्तृत्वमश्नुते ।
भूषणानि च यो दद्याद्गाणपत्यमवाप्नुयात् ॥ ५८ ॥
नानापुष्पप्रधानेन स्वर्गराज्यमवाप्नुयात् ।
धूपो दहति पापानि दीपो मृत्युविनाशनः ॥ ५९ ॥

---

1. अयं धनुरङ्कितो भाग 'ख' कोशे नास्ति ।
2. इदमर्धं मुद्रितग्रन्थे नास्ति ।
3. मुखानि च-ख.
4. भजेत्-मु.
5. सौख्यमाप्नुयात्-मु.
6. उपवीतप्रधानेन ब्रह्म साक्षात्-मु.

[1] सर्वकामांस्तु नैवेद्यं दत्वा तृप्तिरतो भवेत् ।
मुखवासनदानेन कीर्तिमान् भवति ध्रुवम् ॥ ६० ॥

नीराजनेन शुद्धात्मा दर्पणेन प्रकाशवान् ।
फलदः पुत्रवान् मर्त्यः ताम्बूलात्स्वर्गमाप्नुयात् ॥ ६१ ॥

प्रदक्षिणं ततः कुर्यात्पापं हन्ति पदे पदे ।
दण्डप्रणामं यः कुर्याद्देवमुद्दिश्य सन्निधौ ॥ ६२ ॥

वर्षाणि वसति स्वर्गे देहतो रेणु [2] संज्ञया ।
स्तोत्रेण दिव्यदेहोऽपि वाग्मी भवति कीर्तनात् ॥ ६३ ॥

पुराणपठनेनैव सर्वपापक्षयो भवेत् ।
छत्रं दत्वा महेशाय नन्दीश्वरसमो भवेत् ॥ ६४ ॥

तालवृन्तेन सं[3]वीज्य वायुलोके महीयते ।
मयूरचामरं दत्वा मयूरगणराड्भवेत् ॥ ६५ ॥

दत्वा [4] वै चामरं यस्तु देवस्याग्रे प्रवीजयेत् ।
युगकोटिशतं स्वर्गे स्थित्वान्ते राज्यमाप्नुयात् ॥ ६६ ॥

मृदुशय्याप्रदानेन चाक्षय्यं पदमा[5]प्नुयात् ।
[6] सङ्गीतनृत्ते यः कुर्यात्सर्व[7]यज्ञफलं भजेत् ॥ ६७ ॥

---

1. सर्वकर्मैस्तु–मु.
2. सङ्ख्यया–मु. ख.
3. योज्य–ख.
4. तु–मु.
5. मश्नुते–मु.
6. गीतं नृत्तं च–मु.
7. क्रतु–मु.

[1] सुखश्रवणतां गच्छेद्वाद्येन शिवसन्निधौ ।
हृत्पङ्कजे शिवं स्थाप्य शिवत्वं प्राप्नुयाद् ध्रुवम् ॥ ६८ ॥
एवं संक्षिप्य कथिता उपचाराश अनुत्तमाः ।
अन्यानप्युपचारांस्तु [2] मूलेनैव प्रदापयेत् ॥ ६९ ॥
एवं नानाविधैर्बाह्यैरर्चयित्वोपचारकैः ।
इष्टलिङ्गं प्राणलिङ्गमेकीकृत्य समर्चयेत् ॥ ७० ॥

[अन्तरोपचारपूजा]

अन्तर्गतं चिदाकारं लिङ्गं शिवमयं परम् ।
पूजयेद्भावपुष्पैर्यत्प्राणलिङ्गार्चनं हि तत् ॥ ७१ ॥
अन्तः पवनसंमृष्टसुसूक्ष्माम्बरशोभिते ।
मूर्धन्यचन्द्रविगलत्सुधासेकातिशीतले ॥ ७२ ॥
बुद्धेन्द्रियनवद्वारे बोधदीपे हृदालये ।
पद्मपीठे [3] समासीनं [4] चिल्लिङ्गं शिव[5]विग्रहम् ॥ ७३ ॥
भावयित्वा सदाकालं पूजयेद्भावव[6]स्तुभिः ।

[भाववस्तूनि]

क्षमाभिषेकसलिलं विवेको वस्त्रमुच्यते ॥ ७४ ॥
सत्यमा[7]भरणं प्रोक्तं वैराग्यं पुष्पमालिका ।
गन्धः शमादिसंपत्तिरक्षता निरहङ्कृतिः ॥ ७५ ॥

---

1. सुख–ग.
2. मूलमन्त्रेण दापयेत्–मु.
3. सुखा–ख.
4. चिन्मयं–ख., चेल्लिङ्गं–मु.
5. रूपकम्–मु.
6. शुद्धितः–मु.
7. वर–मु.

श्रद्धा धूपो महाज्ञानं जगद्भासिप्रदीपिका ।
भ्रान्तिमूलप्रपञ्चस्य नैवेद्यं तन्निवेदनम् ॥ ७६ ॥

मौनं घण्टापरिस्पन्दस्ताम्बूलं विषयार्पणम् ।
विषयभ्रान्तिराहित्यं स्यात्प्रदक्षिणकल्पना ॥ ७७ ॥

बुद्धेस्तदात्मकत्वं तु नमस्कारक्रिया मता ।
एवं विधैर्भावपुष्पैरुपचारैरदूषितः ॥ ७८ ॥

प्रत्यङ्मुखमना भूत्वा पूजयेल्लिङ्गमान्तरम् ।

[प्राणलिङ्गार्चनया शिवात्मतासम्पत्तिः तस्याः समाधिरूपता च]

(अन्तः क्रियारतस्यास्य प्राणलिङ्गार्चनक्रमैः ॥ ७९ ॥

शिवात्मध्यानसम्पत्तिः समाधिरिति कथ्यते)[1] ।

[शिवस्वरूपं तद्भावनारीतिश्च]

सर्वतत्त्वोपरिगतं सच्चिदानन्दभासुरम् ॥ ८० ॥

स्वप्रकाशमनिर्देश्यमवाङ्मनसगोचरम् ।
उमाख्यया [2] महाशक्त्या दीपितं [3] चित्स्वरूपया ॥ ८१ ॥

हंसरूपं परात्मानं सोऽहंभावेन [4] भावयेत् ।

[शिवसमाधेरुत्तमता, स्तोत्रादीनां जपाद्याधिक्यं च]

(तदेकतानतासिद्धिः [5] समाधिः परमो मतः)[6] ॥ ८२ ॥

---

1. अयं धनुरङ्कितो भागः 'ख' कोशे नास्ति ।
2. परा–मु.
3. स्वस्वरूपया–ख.
4. चिन्त–मु. पूजये–ख.
5. समाधिरिति कथ्यते–मु.
6. इदमर्धं 'ख' कोशे नास्ति ।

पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः ।
जपकोटिसमं ध्यानं ध्यानकोटिर्मनोलयः ॥ ८३ ॥

[बाह्याभ्यन्तरपूजाविध्युपसंहारः]

एवं पूजाविधिः प्रोक्तो बाह्यश्चाभ्यन्तरस्तथा ।
इत्यनेन प्रकारेण सोमशेखरभूपतिः ॥ ८४ ॥
अब्रवीच्चन्नमाम्बायै शिवपूजाविधिं [1] परम् ।

[बसवप्पनायकस्य पट्टाभिषेकः]

अस्माकं च विधानेन कृत्वा पट्टाभिषेचनम् ॥ ८५ ॥
अयं कुमारो बसवप्पनायक इति स्मृतः ।
प्रगल्भतां भजेद्यावद्राज्यभारविचारणे ॥ ८६ ॥

[प्रियायै सोमशेखरनायकस्य राज्यशासने उपदेशः तस्य लिङ्गैक्यं च]

तावन्महीमवन्त्येनां प्रजानां कुरुपालनम् ।
इत्युदीर्य प्रियां राजा सोमशेखरनायकः ॥ ८७ ॥
स्वनामधेययोग्यं स प्राप्तः परशिवास्पदम् ।
अनन्तरं चन्नमाम्बाप्यष्टैश्वर्यसमन्विता ॥ ८८ ॥
प्राणप्रियसमादिष्टसदाचारैकवर्तिनी ।
अशिषत्सकलामुर्वीमुर्वीधरसुता यथा ॥ ८९ ॥

इति शिवतत्त्वरत्नाकरेऽष्टमकल्लोले शिवपूजाक्रमनिरूपणं नाम
सप्तमस्तरङ्गः

—o—

1. ततः–ग.

## अष्टमकल्लोले अष्टमस्तरङ्गः

—o—

कथितं चरितं रम्यं सोमशेखरभूपतेः ।
शिवपूजाविधानं च दुर्विज्ञेयतरं नृणाम् ॥ १ ॥

एतद्द्वयं समाकर्ण्य कर्णद्वयसुधोपमम् ।
सन्तुष्टहृदयः स्वामिन्! जातोऽभवमतःपरम् ॥ २ ॥

चन्द्राम्बिकायाश्चरितं श्रोतुमस्ति कुतूहलम् ।
तदाख्याहि त्रिभुवने विख्यातगुणवारिधे ॥ ३ ॥

कुमार! चरितं तस्या अमानुषजनोचितम् ।
आकर्णय समाकर्ण्य विस्मयानन्ददायकम् ॥ ४ ॥

[चन्द्राम्बिकाया राज्यशासनम्]

सामादिभिरुपायैश्च गुणैः षड्भिस्त्रिशक्तिभिः ।
सप्ताङ्गैः सहिते राज्ये सर्वदैव च जाग्रति(ती) ॥ ५ ॥

शिवधर्मानाचरन्ती राज्यं नीत्या चकार सा ।
अस्माकं सर्वविद्यासु कारयन्ती परिश्रमम् ॥ ६ ॥

विवाहमङ्गलमपि [1] सवैभवमकारयत् ।

[चन्द्राम्बिकायाः सामन्तराजजयः]

कीर्त्या धर्मेण विक्रान्त्या रक्षन्त्या धरणीमिमाम् ॥ ७ ॥

सर्वसन्नाहयुक्तेषु सामन्तेषु कदाचन ।

---

1. सा वैभवं–ग.

सीमोपान्तसमाक्रान्त्यै यतमानेषु दस्युषु ।। ८ ।।
सेनामुख्यान् सहबलैः प्रेषयित्वा बलाधिकान् ।
निगृह्य तद्बलं सर्वं विरचय्य पलायितम् ।। ९ ।।
चलाद्रिसुभगान्नागानश्वान्विश्वातिशायिनः ।
नानाविधानि बिरुदान्यतिमुख्यानि विद्विषाम् ।। १० ।।
[1] आचकर्ष निजोत्कर्षं ख्यापयन्ती दिगन्तरे ।
एवं क्षुद्रान्समुद्धृतान्सामन्तान्विनिगृह्णती ।। ११ ।।
चकार शासनाधीनं सर्वं सामन्तमण्डलम् ।

[अवरङ्गसाबेन पराजितराजारामस्य केलदीदेशसमागमः]

ततश्च सर्वयवनसार्वभौमपदं गते ।। १२ ।।
नृपश्रेष्ठान् द्विपञ्चाशत्सङ्ख्याकान् बलवत्तरान् ।
उन्मूल्यवैरितां प्राप्तं छत्राधिपतिशब्दितम् ।। १३ ।।
रामराजनृपं जित्वा गृहीतुमभिवाञ्छति ।
म्लेच्छाऽवरङ्ग[2]साबाख्ये समायाति बलीयसि ।। १४ ।।
कालं प्रतीक्षमाणोऽथ निर्गत्य स सुधीस्ततः ।
चरित्वा तत्र तत्रापि नृपो मार्गव[3]शागतः ।। १५ ।।
समागतोऽभवद्देशमिमं [4] तु सपरिच्छदः ।

[रामराजस्य मन्त्रिसमालोचनपूर्वकं माननम्]

स्वदेशं समुपायान्तं रामराजं विभाव्य सा ।। १६ ।।

---

1. आजहार–मु.
2. खाना (जेब)–मु.
3. श्या–मु.
4. च–मु.

महतामपि शूराणां बलिनां नीतिवेदिनाम् ।
पराभवस्तत्र तत्र पूर्वेषामपि [1] दृश्यते ॥ १७ ॥

हरिश्चन्द्रश्च नहुषो [2] नलो दाशरथि[3]स्तथा ।
धर्मात्मजस्तथान्ये च नृपास्तत्र निदर्शनम् ॥ १८ ॥

सम्पदो महतामेव महतामेव चापदः ।
हीयते वर्धते चन्द्रो नैवं नक्षत्रतारकाः ॥ १९ ॥

तस्मादुपागतायास्मै सम्माननमिहोचितम् ।
इत्यालोच्य निजैः सार्धं मन्त्रयित्वा च मन्त्रिभिः ॥ २० ॥

महार्हवस्त्रभूषाद्यैः मानयामास मानितम् ।

[धवरङ्गसाबाख्यम्लेच्छनायकेन सह युद्धं तस्य पराजयश्च]

अनुधाव्य तमाया तमुद्धतं म्लेच्छनायकम् ॥ २१ ॥

[4] वर्धमानेनाब्धिनेव स्वबलेनानुधावितम् ।
स्वाम्याज्ञाचण्डवातेन प्रेर्यमाणेन [5] वेणुना ॥ २२ ॥

ज्वलन्तमधिकं भूयो महता[6]मर्षवह्निना ।
सेनाप्रधानमुखतः पराजयमवापयत् ॥ २३ ॥

तद्बलं चानयत्सर्वं यावनं शमनालयम् ।
अमेयबलपूर्णस्य समस्तधरणीशितुः ॥ २४ ॥

यवनाधिपतेः सैन्यं जेतुं कोऽप्यत्र न क्षमः ।

1. श्रूयते–मु. पा.
2. रामो–ग.
3. नृपः–ग.
4. वर्ण्यं–ग.
5. वेधिना–मु.
6. मर्ण–ग.

[आसेतुहिमवत्पादपर्यन्तं चन्नाम्बिकाया विजयस्तुतिः]

एषा विजितवत्यासीत्सैन्यं तस्यापि च स्वयम् ॥ २५ ॥
असाधारणविक्रान्तिरियमित्यखिलैः स्तुता ।
आसेतुहिमवत्पादं कीर्तिं प्राप सुनिर्मलम् ॥ २६ ॥

[चन्नाम्बिकाया यवनाधिपतेः गौरवलाभः अशात्रवधरणीपालनं च]

एनां वार्तामुपश्रुत्य यवनाधिपतेः ततः ।
सन्तुष्टान्नागतुरगवासोऽलङ्कारपूर्वकम् ॥ २७ ॥
[1] सम्मानं प्राप्य धरणीमपालयदशात्रवाम् ।

[पुनः क्षुद्रसामन्तनिग्रहः सनातनधर्मरक्षणं च]

पुनः [2] क्षुद्रांश्च सामन्तान्गलिताहङ्कृतीन् व्यधात् ॥ २८ ॥
पुरातनकृतान् धर्मान् भूसुरैरन्ववर्धयत् ।

[मूकाम्बिकादेव्याः विशेषसेवार्थं भूमिदानं स्वनाम्ना अग्रहारनिर्माणं तस्य भूसुरेभ्यो वितरणं च]

ततो विशेषसेवार्थं मूकाम्बायाः स्वशक्तितः ॥ २९ ॥
भूमिं वितीर्य पर्याप्तां स्वनामपरिचिह्निताम् ।
अग्रहारं च चन्नाम्बपुरमित्यतिविश्रुतम् ॥ ३० ॥
निर्माप्य क्षितिदेवानां सद्वृत्तीः परिकल्प्य च ।

[भूरुद्राणां मठनिर्माणं प्राचीननवीनधर्माणां विशेषतः पालनं च]

भूरुद्राणां कारयित्वा मठांश्च सुबहून् वरान् ॥ ३१ ॥
धर्मान्नूत्नांश्चिरत्नांश्च वर्धयन्ती विशेषतः ।

---

1. समानं-ग.
2. क्षुद्रांश्च-ग.

[इष्टलिङ्गार्चनं जङ्गमार्चनं च]

वितान्वानेष्टलिङ्गार्चां तथा श्रीजङ्गमार्चनम् ॥ ३२ ॥
कुर्वाणा भक्तितः स्वीयैः कारयन्ती च तद्द्वयम् ।

[सर्वधर्मोत्तमषण्णवतिसहस्रोत्तरलक्षजङ्गमसन्तर्पणं तेषां मनुग्रहलाभश्च]

भूरुद्राणां षण्णवतिसहस्रोत्तरलक्षकम् ॥ ३३ ॥
भोजयामास रुचिरैः भोज्यैष्षड्रसमिश्रितैः ।
आनन्दितानां तेषां च लेभे भूयोऽप्यनुग्रहम् ॥ ३४ ।
इदं सर्वेषु धर्मेषु समुत्कृष्टतमं मतम् ।
सन्तर्पणं परं भक्त्या यच्छैवानामभीप्सितैः ॥ ३५ ॥

[शिवभक्तपूजा तस्याः फलं च]

तस्मादतिथिमायान्तमभिगच्छेत्कृताञ्जलिः ।
अभ्युत्थानाभिगमनं स्वागतं चासनं प्रियम् ॥ ३६ ॥
पादोदकमनुव्रज्या स्वर्गसोपानसप्तकम् ।
आसनाभ्यञ्जनस्नानवस्त्रधान्याञ्जनादिभिः ॥ ३७ ॥
पूजयेच्छिवभक्तं यः स याति परमां गतिम् ।

[शिवभक्तदर्शनादिफलम्]

उपपातककोट्यश्च ब्रह्महत्याऽयुतानि च ॥ ३८ ॥
दहत्यशेषपापानि शिवभक्तस्य दर्शनम् ।
भक्तानां दर्शनादेव नृणां स्वर्गोदयो द्विजाः ॥ ३९ ॥
न दुर्लभा न सन्देहो भक्तानां किं पुनस्तथा ।
गङ्गास्नानादिकं पुण्यं दर्शनाच्छिवयोगिनाम् ॥ ४० ॥

सर्वतीर्थाभिषेकाश्च तत्सम्भाषणमुत्तमम् ।
शिवभक्तमथायान्तं दृष्ट्वाऽपि सुमुखः प्रियः ॥ ४१ ॥

प्रणामादि करोत्येव महादेवं यथा तथा ।
स वै भक्त इति ज्ञेयः पुनाति च जगत्त्रयम् ॥ ४२ ॥

मनः प्रसन्नतां याति पूज्यं माहेश्वरं तथा ।
अकुलः कुलयुक्तः स्यान्नमस्कारपुरस्सरम् ॥ ४३ ॥

शिवभक्तमथायान्तं दृष्ट्वैव गृहसंस्थिताः ।
क्रीडन्त्योषधयः सर्वा यास्यामः परमां गतिम् ॥ ४४ ॥

हस्तपादादिसाधर्म्यान्मर्त्यान्रुद्रवपुर्धरान् ।
शिवलिङ्गे शिलाबुद्धिं कुर्वाण इव पातकी ॥ ४५ ॥

[शिवलिङ्गद्वैविध्यं तत्र जङ्गमप्राशस्त्यं च]

स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते ।
जङ्गमस्यावमानेन स्थावरं निष्फलं भवेत् ॥ ४६ ॥

[शिवयोगीन्द्रपूजावश्यकता तत्र कारणं च]

शिवाश्रमगतो भक्तः शिवभक्तं प्रपूजयेत् ।
[1] स्वागतासनदानेन पाद्यार्घ्याद्याभिवादनैः ॥ ४७ ॥

यस्तु माहेश्वरो नित्यं जातमात्रोपजीवकः ।
उत्तमस्सर्वपात्राणां तस्मै दत्तं [2] तदक्षयम् ॥ ४८ ॥

शिवयोगिशरीरे तु नित्यं सन्निहितः शिवः ।
योगीन्द्रं पूजयेत्तस्मात् साक्षात्सम्पूजितः शिवः ॥ ४९ ॥

अकल्मषमतिस्तस्मात्पूजयेच्छिवशासनम् ।

---

1. स्वगत–ग.
2. यद–सु.

[गुणवत्पात्रपूजायाः शासनपूजाया उत्कृष्टता]

गुणवत्पात्रपूजाया वरं शासनपूजनम् ॥ ५० ॥
पात्रशासनयोर्मध्ये शासनं तु विशिष्यते ।

[नित्यत्वादिना पूजयाश्चातुर्विध्यं, तत्र विमलपूजायाम्रतिशयश्च]

नित्यं नैमित्तिकं काम्यं विमलं च चतुर्विधम् ॥ ५१ ॥
हरस्य प्रीणनार्थं यच्छिवभक्त्या विधीयते ।
दानं तद्विमलं प्रोक्तं केवलं मोक्षसाधनम् ॥ ५२ ॥

[वीरमाहेश्वरोपचाराः तेषां प्रत्येकं फलानि च]

युगपच्छिवलिङ्गैक्यपादस्पृष्टरजांसि च ।
पतन्ति मस्तके यस्य स मुक्तो नात्र संशयः ॥ ५३ ॥
पादप्रक्षालनं यस्तु कुरुते शीतलोदकैः ।
वीरमाहेश्वरस्यासौ चतुरम्बुधिराट् भवेत् ॥ ५४ ॥
दद्यान्मृद्वासनं यस्तु शिवभक्तस्य सादरम् ।
धृतलिङ्गस्य स पुमान् सप्तद्वीपाधिपो भवेत् ॥ ५५ ॥
वस्त्रं शीतापनोदार्थं यो दद्याच्छिवयोगिने ।
स सर्वभोगसंयुक्तो लभते ब्रह्मणः पदम् ॥ ५६ ॥
यावत्तद्वस्त्रतन्तूनां परिसङ्ख्या च यावती ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ५७ ॥
छत्रं चोपानहं यस्तु चामरव्यजनानि च ।
दद्याल्लिङ्गार्चकायासावैन्द्रं पदमवाप्नुयात् ॥ ५८ ॥
धनं दद्याद्यथाशक्ति यो महाशिवयोगिने ।
स धनेशत्वमाप्नोति सर्वभोगसमन्वितः ॥ ५९ ॥

कारयित्वा गृहं सम्यक् सर्वोपकरणान्वितम् ।
लिङ्गाङ्गसङ्गिने दद्याद्यः स शैवं पदं व्रजेत् ॥ ६० ॥

सक्तलिङ्गार्चके दत्त्वा भूमिं गोचर्म[1]मातृकाम् ।
भूलोकाधिपतिर्भूत्वा शिवेन सह मोदते ॥ ६१ ॥

सक्तलिङ्गार्चके दत्त्वा धेनुं बहुपयोधराम् ।
रुद्रलोके स वसति यावद्रोमाणि तत्पशोः ॥ ६२ ॥

फलं मूलं च भक्ताय शाकानि विविधानि च ।
भक्तिपूर्वं तु यो दद्यात्स याति परमां गतिम् ॥ ६३ ॥

यद्यदात्महितं लोके तत्तद्द्रव्यमवञ्चयन् ।
शिवलिङ्गार्चके दद्यात्तेन तुष्यामि पार्वति! ॥ ६४ ॥

शिवयोगी गृहे यस्य भिक्षां गृह्णाति सत्कृतः ।
कुलं तारयते तेन सप्त सप्त च सप्त च ॥ ६५ ॥

यस्ताम्रपात्रं सुकृतं प्रदद्याच्छिवयोगिने ।
सुवर्णपात्रदानस्य फलं प्राप्नोति मानवः ॥ ६६ ॥

रौप्यं सौवर्णपात्रं वा निवेद्य शिवयोगिने ।
कोटिकोटिं च कल्पानां शिवलोके महीयते ॥ ६७ ॥

कलशं कर्करीं वापि वस्त्रपूताम्बुपूरितम् ।
प्रदद्याच्छिवभक्तेभ्यः तस्य पुण्यफलं शृणु ॥ ६८ ॥

शुद्धस्फटिकसङ्काशैः विमानैः सार्वकामिकैः ।
सम्प्राप्य शाङ्करपुरं कोटिवर्षं प्रमोदते ॥ ६९ ॥

सुशीतलेन तोयेन शिवभक्तं पिपासितम् ।
तर्पयित्वा शैवलोके वर्षकोटिं प्रमोदते ॥ ७० ॥

1. मात्रकीम्-मु.

नैवेद्यं पुरतो न्यस्तं दर्शनात्स्वीकृतं मया ।
रसान् भक्तस्य जिह्वाग्राद्श्नामि कमलोद्भव! ॥ ७१ ॥

[महेश्वरपूजाप्रशंसनम्]

शिवस्य नित्यतृप्तस्य किं नाम क्रियते जनैः ।
यत्कृतं शिवभक्तानां तेन प्रीतो भवेच्छिवः ॥ ७२ ॥

येन केन प्रकारेण शिवभक्तस्य जायते ।
मनस्तुष्टिस्तथा कुर्यात्पूजा सैव मयोदिता ॥ ७३ ॥

संसारसागरेऽगाधे दुःखावर्तशताकुले ।
मज्जतां मानवानां वै पूजामाहेश्वरस्य नौः ॥ ७४ ॥

[चन्नाम्बिकया लिङ्गजङ्गमपूजाविधानम्]

एवं स्वरूपं विज्ञाय महिमानं फलं तथा ।
लिङ्गजङ्गमयोः पूजां कुर्वाणा भक्तिसंयुता ॥ ७५ ॥

अस्माकमेतदखिलं दुर्विज्ञेयं न्यरूपयत् ।
ततः परं मयि प्रेम्णा करणीयं समादिशत् ॥ ७६ ॥

[बसवभूपाय चन्नाम्बिकाकृतधर्मोपदेशः]

उक्तं त्वं नान्यथा ब्रूयाः क्वापि कार्यं न सन्त्यज ।
मा मुञ्च मधुरालापं न ब्रूयाद्ध्रुदयं शठे ॥ ७७ ॥

अमार्गे न पदं कुर्याः स्त्रेषु भेदं न कारय ।
पापं विमुञ्च सुकृतं कुरु शम्भोः पदं [1] भज ॥ ७८ ॥

भज भूतेषु करुणां संश्रितान् परिपालय ।
न [2] निन्दां रचयान्येषां न स्वैरमिह सञ्चर ॥ ७९ ॥

1. श्रय-ग.
2. निद्रां-ग.

जयकामादिकान् दोषान् जुगुप्सां च भवे कुरु ।
व्यसने भयमुन्मुञ्च जहींहि विभवे मदम् ॥ ८० ॥

संप्रधारय तत्त्वानि भावयाद्वैतमान्तरम् ।
नातिवर्तस्व समयं वेदज्ञांश्च समर्चय ॥ ८१ ॥

स्वप्नं भावय संसारं कोऽहमित्यनुचिन्तय ।
हसेरहसनीयस्त्वं ब्रूहि वाक्यमनुत्त[1]मम् ॥ ८२ ॥

जनस्तुति[2]पदे जीवेरनावृत्तिगतिं भजेः ।
शिवं प्रसाद्य बहुधा सन्ततानन्दभाग्भव ॥ ८३ ॥

कदाचिदमुमर्थं त्वं मां विस्मार्षीरिति स्वयम् ।
उदीर्य विद्याः सकला नानाभेदान्निरूप्य मे ॥ ८४ ॥

तथाप्युपदिशाशेषमित्याज्ञाप्य च मां प्रति ।

[चन्द्राम्बिकायाः शिवपदप्राप्तिः]

वियुक्ता प्राणनाथेन सोमशेखरभूभुजा ॥ ८५ ॥

पुनस्तं मार्गमाणेव तत्पदं यातुमैहत ।
सालोक्यादीन्यतिक्रम्य चत्वार्यपि पदानि च ॥ ८६ ॥

स्वयंशिवपदेनैक्यं प्राप्यानन्दमविन्दत ।

[प्राचीनराजमाहात्म्यकथने स्वोक्त्युपसंहारः]

तदनन्तरमप्यस्मद्वंशजानां महीभृताम् ॥ ८७ ॥

प्राचीनानां चरित्रेषु शौर्यादिषु गुणेषु च ।
एकमंशं सहस्रान्तरनुवर्तामहे वयम् ॥ ८८ ॥

---

1. रमू–ग.
2. पदं–मु. ग.

काहं क च [1]नृपाः पूर्वे पुनरेदं सम्प्रधारय ।
आत्मप्रशंसनं सद्भिर्न कर्तव्यं [2]कदाचन ।। ८९ ।।

इत्यस्मिन् विषये स्वामिन्! उचि[3]तैर्वोऽपसंहृतिः ।

[प्राचीनराजगुणानामादिशेषानिरूपणीयत्वं तत्तत्साक्षिवेद्यता च]

श्रीमतां ज्ञानविभवं धर्माचरणनिष्ठताम् ।। ९० ।।

कीर्तिप्रतापावौदार्यं गाम्भीर्यं धैर्यमित्यपि ।
एवमादींस्तु सुगुणान्प्रस्तोतुं किं क्षमोऽस्म्यहम् ।। ९१ ।।

आननानां सहस्रेण वक्तुं शेषोऽपि न क्षमः ।
तथाप्येतेषु सर्वेषु दृश्यन्ते खलु साक्षिणः ।। ९२ ।।

निर्लेपता च विषये ज्ञानवैभवसाक्षिणी ।
धर्मो दा[4]सोहसत्रादि धर्मनिष्ठा निदर्शनम् ।। ९३ ।।

आगच्छन्तः प्रतिकालमर्थिनो हरिदन्तरात् ।
कीर्तौ वः स्फूर्तिम[5]त्यां ते साक्षिणः प्रतिभान्ति मे ।। ९४ ।।

प्रत्यर्थिपीडनालेशानभिज्ञं जनमण्डलम् ।
राज्ये यत्तत्प्रतापस्य साक्षी नित्यविजृम्भणे ।। ९५ ।।

विद्वांसोऽनितरापेक्षाः साक्षिणोदानवैभवे ।
सर्वविद्यास्त्रभिज्ञत्वे साक्षिणीयं कृतिः कृता ।। ९६ ।।

---

1. नराः–मु.
2. मदात्मभिः–ग.
3. वैष–मु.
4. ऽन्न–मु.
5. त्यास्ते–मु.

किमत्र बहुनोक्तेन गुणाः सर्वेऽपि च त्वयि ।
अन्यदस्ति मम श्रोतुं अपेक्षा हृदि सद्गुरो ॥ ९७ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बर-
शक्तिसमन्वितपरमेश्वरप्रसादासादितशिवाद्वैतविद्याविशारद
श्रीमत्केलदिबसवराजेन्द्रविरचिते वेदागमान्तर्गत-
विविधविद्यातन्त्रसारभूते शिवतत्त्वरत्नाकरेऽष्टम-
कल्लोले चन्नाम्बिकाचरित्रमाहेश्वरमहिम-
तद्दानफलातिशयादिवर्णनं
नामाष्टमस्तरङ्गः

—o—

## अष्टमकल्लोलीयविषयाकरग्रन्थाः

—o—

पराशरं मानवं च याज्ञवल्क्यकृतिं तथा ।
मतं परशुरामस्य द्रोणाचार्यस्य चैव हि ॥

वाराहीं संहितां चैव वातुलं पारमेश्वरम् ।
आगमं चोपनिषदं जाबालाख्यां ततः परम् ॥

शिवागमं च सङ्गृह्य कल्लोलः पूरितोऽष्टमः ।
एकादशाधिकं त्वत्र सहस्रं ग्रन्थसंमितिः ॥

तरङ्गैरष्टसङ्ख्याकैरस्मिन् समुपलक्षिते ।

श्रीमत्सद्गुणसोमशेखरलसच्चन्नाम्बिकासूनुना
श्रीदीक्षागुरुचन्नवीरकरसञ्जातेन गौरीपतौ ।
देवे दत्तहृदा सदापि बसवक्षोणीभृता निर्मिते
कल्लोलः परिपूरितः कृतिवरे त्वस्मिन्नभूदष्टमः ॥

—o—

## नवमकल्लोले प्रथमस्तरङ्गः

—o—

[शिवप्रार्थना]

मातर्वारिजकुड्मलावुरसि तेनाप्तौ विकासं कुतः
तातस्तत्र नखेन चन्द्रकलिकां धत्तेऽविकासाय किम्? ।
ग्लानिं तत्करसम्पुटेन मृदितौ नेतश्च किं तद्वदे-
त्याख्यात्यद्रिसुतां सुते नतमुखीं [1] श्लिष्यन् शिवोऽस्तु श्रिये ॥ १ ॥

[कुमारस्य पूर्वोक्तस्मरणपूर्वकं पिण्डाण्डस्य क्रमविस्तरप्रश्नः महीपालस्योत्तरकथनप्रतिज्ञा च]

स्वामिन्! वंशेऽत्र जातानां नृपाणां पुण्यजन्मनाम् ।
चरितानि विचित्राणि संश्रुत्यानन्दितोऽभवम् ॥ २ ॥

स्थूलोंऽश एव ब्रह्माण्डं पिण्डाण्डं सूक्ष्मरूपकम् ।
इति पूर्वं समाख्याय प्रोक्तो ब्रह्माण्डविस्तरः ॥ ३ ॥

परिभावयतो मे त[2]त्पुरस्थमिव लक्ष्यते ।
अधुना वद पिण्डाण्डक्रमं विस्तरतः प्रभो ॥ ४ ॥

पुत्र! ते तत्प्रवक्ष्यामि यत्पुनः श्रोतुमिच्छसि ।

[शरीरग्रहणहेतवः]

केवलं पुण्यपापाभ्यां तयोः सम्मिश्रणेन च ॥ ५ ॥

उपभोगसहं कर्मफलानां गृह्यते वपुः ।

---

1. पश्यन्–ग.
2. पुरोवर्तीव–मु.

[देव-नारकि-मनुष्याणां शरीरकारणभेदः]

तत्र धर्मेण चैकेन देवानामौपभोगिकम् ॥ ६ ॥
सद्यः प्रजायते दिव्यं शरीरं भूतसारतः[1] ।
अथ नारकिणां पुंसामधर्मादेव केवलात् ॥ ७ ॥
क्षणमात्रेण भूतेभ्यः शरीरमुपजायते ।
कर्मणा[2]प्यभिमिश्रेण यच्छरीरमिहात्मनः ॥ ८ ॥

[भूतपरिणामभेदेनोद्भिदादिचतुर्विधप्राणिसंभवः]

तद्भूतपरिणामेन विज्ञेयं हि चतुर्विधम् ।

[उद्भिदः]

[3]उद्भिदः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः ॥ ९ ॥

[स्वेदजाः]

क्रिमिकीटपतङ्गाद्याः स्वेदजा नाम देहिनः ।

[अण्डजाः]

अण्डजाः पक्षिणस्सर्वे नक्रमत्स्याहिकच्छपाः ॥ १० ॥

[जरायुजाः]

जरायुजा[3]स्तु विज्ञेया मानुषाश्च चतुष्पदाः ।

[स्थावरादिजगदुत्पत्तिः]

जायन्ते स्थावराणां च ततोऽन्नादखिलं जगत् ॥ ११ ॥

---

1. आदितः भूतसारतः इत्यन्तं–वी. मा. कोशे नास्ति ।
2. वाऽपि–वी. मा.
3. उद्भिजः–वी. मा.
4. श्च–मु. वी. कौ. वी. मा.

तत्र सिक्ता जलैर्भूमिरन्त[1]रूष्मप्रपाचिता ।

[बीजभावः]

वायुना[2]व्यूह्यमाना च बीजत्वं प्रतिपद्यते ॥ १२ ॥

[3]यथार्तु तानि बीजानि संसिक्तान्यम्भसा पुनः ।
उच्छूनतां मृदुत्वं च मूलभावं व्रजन्ति च ॥ १३ ॥

[अङ्कुराद्युत्पत्तिक्रमः]

तन्मूलादङ्कुरोत्पत्तिरङ्कुरात्पर्णसंभवः ।
पर्णान्नालं ततः काण्डं काण्डाच्च प्रसवः पुनः ॥ १४ ॥

प्रसवाच्च तुषः क्षीरं क्षीरात्तण्डुलसंभवः ।
तण्डुलाश्च ततः पक्वा म्रियन्त्योषधय[4]स्तथा ॥ १५ ॥

[उत्तमधान्यानि तेषां संख्या च]

यवाद्याश्शालिपर्यन्ताः श्रेष्ठास्सप्तदश स्मृताः ।

[ओषधिलक्षणं क्षुद्रधान्यानि च]

ओषध्यः फलपाकान्ताः शेषाः क्षुद्राः प्रकीर्तिताः ॥ १६ ॥

[धान्यानां संस्कारादितः षड्विधाहारभेदेन परिणामः]

[5]च्युताल्लूना मर्दिताश्च शनैरु[6]त्थाय संस्कृताः ।
[7]सूर्योलूखलयन्त्राद्यैः स्थाल्यामुदकवह्निना ॥ १७ ॥

---

1. तेजसा-वी. मा.
2. योज्यमाना-वी. मा.
3. यथाऽत्रशालि-वी. मा.
4. क्रमात्-वी. कौ., तदा वी. मा.
5. यत्तानुता-वी. कौ.
6. स्थिया-वी. मा.
7. शूर्पो-वी. मा.

षड्विधाहारभेदेन परिणामं व्रजन्ति ताः ।

[अन्नभेदाः षट् मधुरादिषड्रसान्नभेदाश्च]

अन्योन्यरससंयोगादनेकस्वादुतां गताः ॥ १८ ॥

भक्ष्यं भोज्यं च पेयं च लेह्यं चोष्यं च पिच्छिलम् ।
इति भेदास्तु षट् प्रोक्ता मधुराद्याश्च षड्रसाः ॥ १९ ॥

[भुक्तान्नस्यादौ प्राणस्थापकता]

तदन्नं स्थूलकबलैः [1]ग्रासैर्भुक्तं च देहिभिः ।
अन्तस्थमाशये पूर्वं प्राणं स्थापयते क्रमात् ॥ २० ॥

[जठरे वायुना अन्नपाकक्रमः]

अपृथग्भूतमाहारं स वायुः कुरुते द्विधा ।
संप्रवि[2]श्यान्नमध्ये तु पृथगन्नं पृथग्जलम् ॥ २१ ॥

अग्नेरूर्ध्वं जलं स्थाप्य तदन्नं तु जलोपरि ।
जलस्याधः स्वयं प्राणः स्थित्वाग्निं [3]धमते शनैः ॥ २२ ॥

वायुना [4]ध्मयमानोऽग्निरत्युष्णं कुरुते जलम् ।
तदन्नमुष्णतोयेन समन्तात्पच्यते पुनः ॥ २३ ॥

[पक्वान्नस्य रसकिट्टात्मना द्वैविध्यं द्वादशधा भिन्नस्य किट्टस्य बहिर्निर्गमश्च]

द्विधा भवति तत्पक्वं पृथक्किट्टं पृथ[5]ग्रसः ।
मलैर्द्वादशभिर्भिन्नं किट्टं देहाद्बहिर्व्रजेत् ॥ २४ ॥

---

1. परि–वी. मा.
2. श्या–ग.
3. धमयेच्छ–मु.
4. धाम्य–ग.
5. गूलरः–ग., ग्रासं–मु.

[द्वादशमलाः तदाश्रयाश्च]

कर्णाक्षिनासिकाजिह्वा दन्तशिश्नगुदा नखाः ।
मलाश्रयाः कफस्वेदौ विण्मूत्रं द्वादशस्मृताः ॥ २५ ॥

[प्राणेन रसस्य नाडीपूरणं तासु तस्य पुनः पाकः]

हृत्पद्मे प्रतिबद्धाश्च सर्वा नाड्यस्समन्ततः ।
तासां मुखेषु तत्सूक्ष्मं प्राणः स्थापयते रसम् ॥ २६ ॥
रसेन तेन ता [1]नाडीः प्राणः पूरयते पुनः ।
प्रतर्पयन्ति सम्पूर्णाः ताश्च देहं समन्ततः ॥ २७ ॥
ततः सनाडीमध्यस्थः शरीरेणोष्मणा रसः ।

[रसेन रुधिरोत्पत्तिः]

पच्यते [2]पच्यमानाच्च भवेत्पाकद्वयं ततः ॥ २८ ॥
चर्म[3]विष्टं समन्ताच्च रुधिरं च प्रजायते ।

[रक्तात् शुक्रान्तधातूत्पत्तिक्रमः]

रक्ताल्लोमानि मांसं च केशाः स्नायुश्च मांसतः ॥ २९ ॥
स्नायोः सिरास्तथास्थीनि नखम[4]ज्जास्थि संभवः ।
मज्जात्करणवैकल्याच्छुक्लं च प्रसवात्मकम् ॥ ३० ॥
इति द्वादशधाऽन्नस्य परिणामः प्रकीर्तितः ।

[शुक्रस्य कर्मनियोजितजीवसंबन्धेन गर्भप्रवेशः]

अन्नाच्चैव ततः शुक्रं शुक्राद्देहस्य संभवः ॥ ३१ ॥

---

1. नाड्यस्थाः–वी. मा.
2. यच्चपा–ग.
3. वेष्टं–ग.
4. ज्जेऽस्थि–मु.

ऋतुकाले यदा शुक्रं निर्दोषं योनिसंस्थितम् ।
तदा तद्वायुना स्पृष्टं स्त्रीरक्तेनैकतां व्रजेत् ॥ ३२ ॥

विसर्गकाले शुक्रस्य जीवः करणसंयुतः ।
प्रीत्या प्रविशते योनिं कर्मभिः स्वैर्नियोजितः ॥ ३३ ॥

[स्त्रीसंगकालस्थितमनोभिप्रायानुरोधेन पिण्डोत्पत्तिविशेषः]

स्त्रियः संसर्गकाले तु यो धर्मं मनसा स्मरेत् ।
तत्पुत्रो धर्मवान् भूयादिति शास्त्रेषु निश्चितम् ॥ ३४ ॥

पत्नीसंसर्गकालेतु जारबुध्या [1] स्मरेन्नरः ।
तद्गर्भजो भुजङ्गः स्यात्परनारीपरायणः ॥ ३५ ॥

चोरबुद्धिं हृदिस्थाप्य स्वस्त्रीसङ्गरतो यदि ।
चोरस्तद्गर्भजो भूयात्खलो वापि विजायते ॥ ३६ ॥

बहुनात्र किमुक्तेन यद्यन्मनसि भावयेत् ।
तद्गर्भजस्तद्गुणवान् जायते नात्र संशयः ॥ ३७ ॥

[ऋतुकाले नक्षत्रानुरोधेनापत्योत्पत्तिः]

ऋतौ पुरुषनक्षत्रे यामादूर्ध्वं रमेत् [2] स्त्रियाम् ।
उभावेकमनस्कौ चेज्जायते पुरुषोत्तमः ॥ ३८ ॥

ऋतौ चेत्क्लीबनक्षत्रे संसर्गो जायते यदा ।
तद्गर्भजो भवेत्क्लीबः सर्वधर्मबहिष्कृतः ॥ ३९ ॥

स्त्रीनक्षत्रे ऋतौ गच्छेन्नारीं स्वां पुरुषो यदि ।
तद्गर्भजा भवेत्कन्या युग्मभे यमलौ भुवि ॥ ४० ॥

---

1. रमेत यः-मु.
2. छन्दोभङ्गभिया रमेदिति प्रयुक्तमिति भाति ।

यादृशेनैव भावेन [1]योनौ शुक्लं [2]समुत्सृजेत् ।
तादृशेनैव भावेन ह्यपत्यं जायते नृणाम् ॥ ४१ ॥

[शुक्लस्य वर्णगन्धाद्यनुगुणजीवोत्पत्तिः]

यच्छुक्लं पूतिगन्धिस्यात्तत्पुत्रो व्याधिमान् भवेत् ।
[3]तिक्तगन्धं तु [4]यच्छुक्लं यच्छुक्लं मांसगन्धवत् ॥ ४२ ॥

अपुत्रो वा भवेत्सोऽयमथवा मृतपुत्रकः ।
[5]पुष्पगन्धं भवेद्रेतो यस्य पुंसः सरक्तकम् ॥ ४३ ॥

तदपत्यं भजे[6]द्धर्मे आयुर्वर्षशतं भुवि ।
नीलवर्णं भवे[7]च्छुक्लमथवा पीतकर्बुरम् ॥ ४४ ॥

तदपत्यं भवेद्भूमौ [8]पतिपुत्रविनाशकृत् ।

[गर्भप्रविष्टरेतसो बिन्दुसंख्यानुगुणजीवोत्पत्तिः]

बिन्दूनां पञ्चदशकं योनौ प्रविशते यदि ॥ ४५ ॥

तदपत्यं च कौमारे वयस्येव [9]मृतिं भजेत् ।
दश द्वादश वा योनौ बिन्दवो निपतन्ति चेत् ॥ ४६ ॥

---

1. नरः–मु.
2. विसर्जयेत्–मु.
3. रक्त–वी. कौ.
4. यदाशुक्लं–मु.
5. पुष्प–ग.
6. द्दीर्घमा–मु. वी. कौ.
7. द्रेतश्चाथ–मु.
8. पत्नी–मु.
9. मृती भवेत्–वी. कौ.

अब्दे [1] विंशेऽथवा त्रिंशे मृतिं स समवाप्नुयात् ।
अष्टौ षड्वाऽपि [2] शुक्रस्य बिन्दवो योनिसङ्गताः ॥ ४७ ॥
दीर्घायुस्तदपत्यं स्यादारोग्यादिबलान्वितम् ।

[पुरुषाद्यपत्यनिमित्तानि]

पुमान् शुक्रेऽधिके स्त्री वै रक्ताधिक्ये प्रजायते ॥ ४८ ॥
[3] उभे समे निषेके तु कुब्जवामनकादयः ।

[पुमपत्योत्पत्तियोगाः]

अर्केन्दुजीवशुक्रैर्वा [4] स्वर्गे वा स्वान्तकोदये ॥ ४९ ॥
भौमदृष्टियुते वापि पुंयोगाः स्युरिमे मताः ।
लग्नस्थः सुतसंस्थो वा नवमे वा बली गुरुः ॥ ५० ॥
ऋतुविरमे स्नातायां यद्युपचयसंस्थः शशी भवति ।

[युवत्याः वेश्यापदप्राप्तियोगाः]

बलिना गुरुणा दृष्टो भर्त्रा सहसङ्गमश्च तदा ॥ ५१ ॥
राजपुरुषेण रविना विटेन भौमेन वीक्षिते चन्द्रे ।
सौम्येन चपलमतिना भृगुणा कान्तेन रूपवता ॥ ५२ ॥
भृत्येन सूर्यपुत्रेणायाता स्त्रीसमायोगम् ।
सर्वं स्वगृहं त्यक्त्वा गच्छति वेश्यापदं यवती ॥ ५३ ॥

---

1. विंशतमे त्रिंशदब्दे वा मृतिमाप्नुयात्–ग.
2. वीर्यस्य–मु.
3. 'उभे समे निषेके तु' इत्यारभ्य 'रजः प्रवर्तते स्त्रीषु' इत्यन्तं–वी. कौ. कोशे नास्ति ।
4. स्वर्वैर्वा–मु.

[गर्भहेतुरजोत्पत्तिकालः]

इन्दुर्जलं कुजोऽग्नीः रक्तजलमग्निरेव पित्तं स्यात् ।
एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीषु ॥ ५४ ॥

एवं यद्भवति रजोगर्भस्य निमित्तमेव कथितं तत् ।

नाभिमूले स्थितं पद्मं चतुर्दलसमन्वितम् ।
तस्मिन् सर्वश्च दधते गर्भसम्भवकारणम् ॥ ५५ ॥

अधोमुखं स्थितं स्त्रीणां तद्बाल्ये कुड्मलीकृतम् ।
बाल्यात्परवयः प्राप्तौ कुड्मलं विकसद्भवेत् ॥ ५६ ॥

उत्फुल्लं कुसुमं स्त्रीषु स्वभावेन स्रवेद्रजः ।

[ऋतौ संयोगे त्याज्यदिनानि]

स्नानस्य दिवसादर्वाक् दोषं वक्ष्यामि सङ्गमे ॥ ५७ ॥

प्रथमेऽह्न्यृतौ प्राप्ते [1] निषेकं यः करिष्यति ।
[2] शीघ्रं स मृत्युमाप्नोति द्वितीये स्त्री मरिष्यति ॥ ५८ ॥

तृतीयेऽह्नि [3] निषिक्तस्य गर्भस्य मरणं भवेत् ।
चतुर्थे जायते पुत्रो ह्यल्पायुर्धनवर्जितः ॥ ५९ ॥

विद्याहीनस्स्थानशून्यो दुःखी चाचारवर्जितः ।
पितुरिन्द्रियनाशश्च चतुर्थं तद्विवर्जयेत् ॥ ६० ॥

[ऋतुगमनयोग्यदिनानि]

पञ्चमे जायते पुत्री षष्ठे पुत्रः सपौत्रकः ।
सप्तमे चाप्रजा कन्या अष्टमे चेश्वरः स्मृतः ॥ ६१ ॥

---

1. निषिञ्चयति–मु.
2. अचिरात्–मु.
3. निषेकस्य–ग.

नवमे तु तथा पापी दशमे प्रवरस्सुतः ।
एकादशे तु [1] कुलटा द्वादशे पुरुषोत्तमः ॥ ६२ ॥
त्रयोदशे वरा नारी [2] धनाढ्यश्च चतुर्दशे [3] ।
कन्या मृता पञ्चदशे सर्वज्ञः षोडशे [4] स्मृतः ॥ ६३ ॥
तस्मादुक्तेषु कालेषु ऋतुस्नातां स्त्रियं व्रजेत् ।

[गर्भिण्युदरे पुरुषाद्यपत्यचिह्नानि]

सुवृत्तगर्भस्त्वपसव्यकुक्षिगः
पुमांस्तु कन्या खलु वामकुक्षिगा ।
मध्योदरस्थश्च नपुंसकः स्यात्
कुक्षिद्वयस्थो यमलः [5] सुतो भवेत् ॥ ६४ ॥

[गर्भचिह्नपरिज्ञानं गर्भिणीरक्षणं च]

लिङ्गं तु सद्योगर्भाय योन्यां बीजस्य सङ्ग्रहे ।
तृप्तिर्गुरुत्वं स्फुरणं शुक्लस्रावः सुबन्धनम् ॥ ६५ ॥
हृदयस्पन्दनं तन्द्री [6] तृड्ग्लानिर्लोमहर्षणम् ।
क्षामता गरिमा कुक्षिमूर्छा छर्दिररोचकम् ॥ ६६ ॥

---

1. अधमास्त्री–ग.
2. धनदाश्च–ग.
3. इतः परं अयमधिको श्लोकः वी. कौ कोशे वर्तते—
ऋतौ पञ्चदशे कन्या गुणालङ्करणा शुभा ।
षोडशे युवति. श्लाघ्यं सर्वज्ञं जनयेत् सुतम् ॥
4. सुतः–वी. कौ.
5. प्रजायते–मु.
6. स्वज्ञानीरो–वी. कौ.

जृम्भः प्रसेकः सदनं रोमराज्याः प्रकाशकम् ।
[1]आम्लेष्टकास्तनौ पीनौ [2]उन्नतौ कृष्णचूचुकौ ॥ ६७ ॥

पाद[3]शोभो विदोह्नोऽन्याः श्रद्धाश्च विविधात्मिकाः ।
[4]मृद्भक्षणं च पाण्डुत्वं गर्भिण्या [5]लक्ष्म चेदृशम् ॥ ६८ ॥

मातृजिह्मस्य हृदयं मातुश्च हृदयेन तत् ।
संबद्धं तेन गर्भिण्या नेष्टं श्रद्धावमान[6]नम् ॥ ६९ ॥

दौहृदस्याप्रदानेन स गर्भो दोषमाप्नुयात् ।
वैरूप्यं मरणं चापि तस्मात्कार्यं प्रियं स्त्रियः ॥ ७० ॥

देयमप्यहितं त[7]स्यै हितोपहितमल्पकम् ।

[गर्भिण्या वर्ज्यकार्याणि तत्करणे दोषश्च]

अति[8]व्यायाममायासं भारं प्रावरणं गुरु ॥ ७१ ॥

अकालजागरस्वप्नौ कठिनात्कुक्कुटासनम्[9] ।
शोकक्रोधभयोद्वेगवेगश्रद्धा[10]विधारणम् ॥ ७२ ॥

---

1. क्षात्रे-मु.
2. प्रोन्नतौ-मु.
3. फ-मु., चो-वी. कौ.
4. 'मृद्भक्षणं च पाण्डुत्वं' इत्यारभ्य 'कुक्षौ शुष्ये म्रियते वा' इत्यन्तं वी. कौ. कोशे नास्ति ।
5. लिङ्गमीदृशम्-ग.
6. नम्-ग.
7. स्माद्धि-मु.
8. व्यवाय-मु.
9. इतःपरं इदमर्धं मु. कोशे अधिकं वर्तते-'कुक्कुटासनकं निन्दा प्रलापो निष्ठुरं वचः' ।
10. विधातनम्-मु.

उपवासाध्वतीक्ष्णोष्णं गुरु विष्टम्भिभोजनम् ।
रक्तं [1] विवसनं श्वभ्रकूपेक्षा मद्यमामिषम् ॥ ७३ ॥
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥ ७४ ॥

[अष्टमासान्तगर्भवृद्धिप्रकारः]

तच्छुक्लरक्तमेकस्थमेकाहा[2]त्कललं भवेत् ।
पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत् ॥ ७५ ॥
बुद्बुदं सप्तरात्रेण मांसपेशी भवेत्पुनः ।
द्विसप्ताहाद्भवेत्पेशी रक्तमांसचिता दृढा ॥ ७६ ॥
बीजस्येवाङ्कु[3]राः पेश्या पञ्चविंशतिरात्रतः ।
भवन्ति मासमात्रेण पञ्चधा जायते पुनः ॥ ७७ ॥
ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम् ।
पाणिपादं तथा पार्श्वं कटिर्गात्रं तथैव च ॥ ७८ ॥
मासद्वयेन सर्वाणि क्रमशः संभवन्ति च ।
त्रिभिर्मासैः प्रजायन्ते सर्वाङ्गाङ्कुरसन्धयः ॥ ७९ ॥
मासैश्चतुर्भिरङ्गुल्यः प्रजायन्ते तथा क्रमात् ।
मुखं नासा च कर्णौ च जायन्ते पञ्चभिः पुनः ॥ ८० ॥
दन्तपङ्क्तिस्तथा गुह्यं जायन्ते च नखाः पुनः ।
कर्णयो[4]र्भवति छिद्रं षण्मासाभ्यन्तरेण तु ॥ ८१ ॥

1. निवसनं–ग.
2. केवलं–ग.
3. रोत्पत्तिः–बी. मा.
4. स्तु भवेच्छिद्रं–बी. मा.

पायुमेढ्रमुपस्थं च नाभिश्चाप्युपजायते ।
सन्धयो ये च गात्रेषु जायन्ते माससप्तके ॥ ८२ ॥

अङ्गप्रत्यङ्गसंपूर्णः शिरः केशसमन्वितः ।
विभक्तावयवः स्पष्टः [1]पुमर्मासाष्टकेन तु ॥ ८३ ॥

[2]पुनर्गर्भं पुनर्धात्रीमोहस्तत्र प्रधावति ।
अष्टमे मासि तद्गर्भो जातः प्राणैर्वियुज्यते ॥ ८४ ॥

हृदि तिष्ठति यच्छुद्धमीषच्छुक्लं सपीतकम् ।
ओजः शरीरे तज्जातं यन्नाशान्नाशमृच्छति ॥ ८५ ॥

मातुराहारवीर्येण षड्विधेन रसेन च ।
नाभिसूत्रनिबद्धेन वर्धते स दिने दिने ॥ ८६ ॥

[गर्भस्थजीवस्य शरीरसंपूर्तौ सुखाद्यनुभवः पुराकृतस्मृतिश्च]

ततः स्मृतिं लभेज्जीवः संपूर्णेऽस्मिच्छरीरके ।
सुखं दुःखं विजानाति निद्रां स्वप्नं पुराकृतम् ॥ ८७ ॥

[गर्भस्थशिशोः अवस्थारीतिः तदानीन्तनचिन्ता च]

[3](पाल्यन्तरितहस्ताभ्यां श्रोत्ररन्ध्रे पिधाय सः ।
उद्विग्नो गर्भसंबन्धादास्ते गर्भाशयान्वितः) ॥ ८८ ॥

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नानायोनिसहस्राणि मया दृष्टानि भूरिशः ॥ ८९ ॥

अधुना जातमात्रोऽहं प्राप्तसंस्कार एव च ।
यत्तच्छ्रेयः करिष्यामि येन गर्भे न संभवः ॥ ९० ॥

---

1. पुमान्-सु.
2. 'पुनर्गर्भं' इत्यारभ्य 'यन्नाशान्नाशमृच्छति' इत्यन्तं-वी. मा. कोशे नास्ति ।
3. अयं धनुरङ्कितो भागः-वी. मा. कोशे नास्ति ।

गर्भस्थश्चिन्तयत्येवमहं गर्भाद्विनिर्गतः ।
अध्येष्यामि शिवज्ञानं संसारविनिवर्तकम् ॥ ९१ ॥
एवं [1] गर्भे सुदुःखेन महता परिपीडितः ।
जीवः कर्मवशादास्ते मोक्षोपायं विचिन्तयन् ॥ ९२ ॥

[गर्भस्थशिशोः दुःखम्]

यथागिरिवराक्रान्तः कश्चिद्दुःखेन [2] तिष्ठति ।
लोहकुम्भे यथा न्यस्तः पच्यते कश्चिदग्निना ॥ ९३ ॥
गर्भकुम्भे तथा क्षिप्तः पच्यते जाठराग्निना ।
सूचीभिरग्निवर्णाभिर्निर्भिन्नस्य निरन्तरम् ॥ ९४ ॥
यद्दुःखमुपजायेत तद्गर्भेऽष्टगुणं भवेत् [3] ।

[गर्भस्थशिशोः प्रसवकालः तदातनदुःखातिशयश्च]

[4] (नममे दशमे वापि प्रबलैस्सूतिमारुतैः ॥ ९५ ॥
निस्सार्यते बाण इव यन्त्रच्छिद्रेण [5] सत्वरम् ।
इत्येतद्गर्भदुःखं हि प्राणिनां परिकीर्तितम् ॥ ९६ ॥
बाह्येन वायुना स्पृष्टो विस्मरत्यात्मनः स्थितिम्) ।
गर्भात्कोटिगुणं दुःखं योनियन्त्रप्रपीडनात् ॥ ९७ ॥

---

1. सगर्भः–वी. मा.
2. जीवति–मु.
3. इतः परं वी. मा. कोशे अयमधिको भागः वर्तते—
   तथा जरायुणा देही दुःखे तिष्ठति वेष्टितः ।
   पतितः सागरे यद्वद्दुःखमास्ते समाकुलः ॥
   गर्भोदकेन सिक्ताङ्गस्तथा व्याकुलितः पुमान् ।
4. अयं धनुरङ्कितो भागः वी. मा. कोशे नास्ति ।
5. ज्वरम्–ग.

संमूर्छा जायते तस्य जायमानस्य देहिनः ।
[1] तिलवत्पीड्यमानस्य यन्त्रेणेव समन्ततः ॥ ९८ ॥

[2] यथैव ताड्यमानस्य [3] पाशामुद्गरकोटिभिः ।
[4] तथा निष्कास्यमानस्य प्रबलैस्सूतिमारुतैः ॥ ९९ ॥

जायते सुमहद्दुःखं परित्राणमविन्दतः ।

[जातस्य शिशोः रूपम्]

एवं गर्भात्प्रजातस्य वपुषो रूपमीर्यते ॥ १०० ॥

अस्थ्नां षष्ट्युत्तरं देहे शतानां त्रितयं स्मृतं ।
स्थालैस्सह चतुष्षष्टिर्दन्ता वै विंशतिर्नखाः ॥ १०१ ॥

पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम् ।
षष्ट्यङ्गुलीनां द्वे पार्ष्णी गुल्फेषु च चतुष्टयम् ॥ १०२ ॥

चत्वार्यरत्निकास्थीनि जङ्घयो[5]स्तावदेव तु ।
द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे ॥ १०३ ॥

अक्षतारवोष्ठके श्रोणीफलके च विनिर्दिशेत् ।
भाग्यस्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ॥ १०४ ॥

ग्रीवा पञ्चदशास्थि स्याज्जत्रावेकं तथा हनुः ।
तन्मूले द्वे ललाटाक्षि गण्डेनासाघनस्तिका ॥ १०५ ॥

पार्श्वकाः स्थापकैस्सार्धमर्बुदैश्च द्विसप्ततिः ।
द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा ॥ १०६ ॥

---

1. इक्षु–वी. मा.
2. शिरस्य–वी. मा.
3. यन्त्र–मु.
4. गर्भान्निष्क्रममाणस्य–वी. मा.
5. स्थानमेव तत्–वी. कौ.

उरस्सप्तदशास्थीनि पुरुषस्यास्थिसङ्ग्रहः ।

[विषयपञ्चकम्]

गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः ॥ १०७ ॥

[पञ्चज्ञानेन्द्रियाणि]

नासिका लोचनं जिह्वा त्वक्छोत्रं चेन्द्रियाणि च ।

[पञ्चकर्मेन्द्रियाणि]

हस्तौ पायुरुपस्थं च जिह्वापादौ च पञ्च वै ॥ १०८ ॥

कर्मेन्द्रियाणि जानीयान्मनस्तत्रोभयात्मकम् ।

[प्राणस्थानानि]

[1]नाभिरोजो गुदं शुक्रं शोणितं शङ्खिका तथा ॥ १०९ ॥

मूर्धा सकण्ठहृदयं प्राणस्यायतनानि तु ।

[शरीरस्थानानि]

वपावसावहननं नाभिक्लोमयकृत्प्लिहा ॥ ११० ॥

क्षु[2]द्रान्त्रं वृक्कको वस्ति पुरीषाधानमेव च ।

आमाशयोऽथ हृदयं स्थूलान्त्रं गुद एव च ॥ १११ ॥

उदरं गुदकोष्ठौ च विस्तारोऽयमुदाहृतः ।

कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रिका ॥ ११२ ॥

गुदौ शङ्खौ भ्रुवौ दन्तावेष्टावेष्टौ ककुन्दरौ ।

वंक्षणौ वृषणौ वृक्काश्लेष्मसङ्घातकस्तनौ ॥ ११३ ॥

---

1. नाभ्योरु–वी. कौ.
2. धान्तवृक्ककावस्ति–वी. कौ.

उपजिह्वास्फिजौ बाहूजङ्घोरुषु च पिण्डिका ।
तालूदरं वस्तिशीर्षे चुबुकं गलतुण्डिके ॥ ११४ ॥
अवटुश्चैवमेतानि स्थानान्यत्र शरीरके ।

[नवद्वाराणि]

अक्षे चर्मचतुष्कं च [1] पर्यस्तहृदयानि च ॥ ११५ ॥
नवछिद्राणि तान्येव प्राणस्यायतनानि च ।

[धमनीनां सङ्ख्या]

सिराशतानि सप्तैव नव स्नायुशतानि च ॥ ११६ ॥
धमनीनां शते द्वे तु पञ्च पेशीशतानि च ।
एकोनत्रिंशल्लक्षाणि तथा नव शतानि च ॥ ११७ ॥
षट्पञ्चाशच्च [2] जानीयात्सिराधमनिसंज्ञिताः ।

[केशसङ्ख्या]

त्रयो लक्षणाश्च विज्ञेयाः श्मश्रुकेशाः शरीरिणाम् ॥ ११८ ॥
सप्तोत्तरं मर्मशतं [3] द्वे च सन्धी शते तथा ।
रोम्णां कोट्यस्तु पञ्चाशच्चतस्रः कोट्य एव च ॥ ११९ ॥
सप्तषष्टिस्तथा लक्षाः सार्धाः स्वेदयनैः सह ।

[शरीरस्थनवरसाः]

रसस्य नव विज्ञेया जलस्याञ्जलयो दश ॥ १२० ॥

---

1. पदस्थ–वी. कौ.
2. जानी च–ग.
3. द्वे सन्धिशतके तथा–वी. कौ.

सप्तैव तु पुरीषस्य रक्तस्याष्टौ प्रकीर्तिताः ।
षट्श्लेष्म पञ्चपित्तं तु चत्वारो मूत्रमेव च ॥ १२१ ॥
वसात्रयो द्वौ तु [1]मेशो मज्जैकोर्धं तु मस्तके ।
श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु ॥ १२२ ॥

[शिशोः मातृपितृजाः षड्विधभावाः तत्र मातृजा षट्]

भावास्तु षड्विधास्तस्य मातृजाः पितृजास्तथा ।
रसजा आत्मजास्सत्त्वसंभवाः सात्विकास्तथा ॥ १२३ ॥
मृदवः शोणितं [2]मेदो मज्जाप्लीहायकृत् गुदम् ।
हृन्नाभीत्येवमाद्यास्तु भावा मातृभवा मताः ॥ १२४ ॥

[पितृजाः भावाः]

श्मश्रु लोम कचास्स्नायुशिराधमनयो नखाः ।
दशनाः शुक्रमस्थ्याद्याः सिराः पितृसमुद्भवाः ॥ १२५ ॥

[देहस्य भूतगुणादानम्]

देहो भूतात्मकस्तस्मादादत्ते तद्गुणानिमान् ।
शब्दं श्रोत्रं सुषिरतां वैचित्र्यं सूक्ष्मबोधताम् ॥ १२६ ॥
बलं च गगनाद्वायोः स्पर्शं च स्पर्शनेन्द्रियम् ।
उत्क्षेपणमपक्षेपाकुञ्चने गमनं तथा ॥ १२७ ॥
प्रसारणमितीमानि पञ्चकर्माणि रूक्षता ।
अग्नेस्तु लोचनं रूपं पित्तं पाकं प्रकाशिता ॥ १२८ ॥

---

1. मेदो–ग.
2. मेशो–मु.

अमर्षं तैक्ष्ण्यमू[1]ष्माणमोजस्तेजश्च शूरताम् ।
मेधादीनि तथा दत्ते जलात्तु रसनं रसः ॥ १२९ ॥
शैत्यं स्नेहः द्रवं स्वेदः गात्रादिमृदुतामपि ।
भूमे घ्राणेन्द्रियं गन्धः स्थैर्यं धैर्यं च गौरवम् ॥ १३० ॥
श्मश्रुकेशनखान् दन्तानस्थ्याद्यं यच्च कर्कशम् ।

[आधारचक्रस्थानं तल्लक्षणं तत्रत्यविशेषाश्च]

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ॥ १३१ ॥
परमः सहजस्तद्वदानन्दो वीरपूर्वकः ।
योगानन्दश्च तस्य स्यादैशान्यादिदले फलम् ॥ १३२ ॥
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ।
आब्रह्मरन्ध्रमृजुतां नीतेयममृतप्रदा ॥ १३३ ॥

[स्वाधिष्ठानचक्रस्थानं तल्लक्षणं तत्रत्यविशेषाश्च]

स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रमस्य च ।
पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात् ॥ १३४ ॥
प्रश्रयः क्रूरता गर्वो नाशो मूर्छा ततः परम् ।
अवज्ञा स्यादविश्वासः [2]कामशक्तेरिदं गृहम् ॥ १३५ ॥

[मणिपूरकचक्रस्थानं तल्लक्षणं तत्रत्यविशेषाश्च]

नाभौ दशदलं चक्रं मणिपूरकसंज्ञकम् ।
सुषुप्तिरत्र तृष्णा स्यादीर्ष्या पिशुनता तथा ॥ १३६ ॥

---

1. ष्मादि–वी. कौ.
2. कामशक्ति–ग.

लज्जा भयं घृणा मोहः कषायोऽथ [1] विषादिना ।
क्रमात्पूर्वादिपत्रेषु स्याद्भानुभवनं च तत् ॥ १३७ ॥

[अनाहतचक्रस्थानं तल्लक्षणं तत्रत्यविशेषाश्च]

हृदयेऽनाहतं चक्रं शिवस्य प्रणवाकृतेः ।
पूजास्थानं तदिच्छन्ति दलैर्द्वादशभिर्युतम् ॥ १३८ ॥

लौल्यं प्रणाशः [2] कापट्यं वितर्कोऽप्यनुतापिता ।
आशा प्रकाशश्चिन्ता च समीहासमता तथा ॥ १३९ ॥

क्रमेण दम्भो वैकल्यं विवेकोऽहङ्कृतिस्तथा ।
फलान्येतानि पूर्वादिदल[3]स्थस्यात्मनो जगुः ॥ १४० ॥

[विशुद्धिचक्रस्थानं तल्लक्षणं तत्रत्यविशेषाश्च]

कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम् ।
तत्र प्रणव उद्गीथो हुं फड् वौषड् वषट् स्वधा ॥ १४१ ॥

स्वाहा नमोऽमृतं सप्त स्वराष्षड्जादयो विषम् ।
इति पूर्वादिपत्रेषु फलान्यात्मनि षोडश ॥ १४२ ॥

[ललनाचक्रस्थानं तल्लक्षणं तत्रत्यविशेषाश्च]

ललनाख्यं घण्टिकायां चक्रं द्वादशपत्रकम् ।
मदो मानस्तथा स्नेहः शोको भेदश्च लुब्धता ॥ १४३ ॥

अरतिः सम्भ्रमश्चोर्मिः श्रद्धा [4] तोषोपरोऽ[5]धिकः ।
फलानि ललनाचक्रे पूर्वादिषु दलेष्विति ॥ १४४ ॥

---

1. विषाधिका–वी. कौ.
2. कपिये–ग.
3. स्थान्या–वी. कौ.
4. तोषाप–ग.
5. दिता–ग., धिका–वी. कौ.

[आज्ञाचक्रस्थानं तल्लक्षणं तत्रत्यविशेषाश्च]

भ्रूमध्ये [1] त्रिदलं चक्रमाज्ञासंज्ञं [2] फलानि तु ।
आविर्भावास्सत्वरजस्तमसां क्रमशो मताः ॥ १४५ ॥

[मनश्चक्रलक्षणं तत्रत्यविशेषाश्च]

ततोप्यस्ति मनश्चक्रं षड्दलं तत्फलानि तु ।
स्वप्नो रसोपयोगश्च घ्राणं रूपोपलम्भनम् ॥ १४६ ॥
स्पर्शनं शब्दबोधश्च पूर्वादिषु दलेष्विति ।

[सोमचक्रलक्षणं तत्रत्यविशेषाश्च]

ततोऽपि षोडशदलं सोमचक्रमितीरितम् ॥ १४७ ॥
दलेषु षोडश स्वस्य कलाः षोडश संस्थिताः ।
कृपा क्षमार्जवं धैर्यं वैराग्यधृतिसम्मदाः ॥ १४८ ॥
हास्यं रोमाञ्चनिचयो ध्यानं सुस्थिरता ततः ।
गाम्भीर्यमुद्यमस्सत्वमौदार्यैकाग्रते क्रमात् ॥ १४९ ॥
फलानि सन्ति जीवस्य पूर्वादिदलगामिनः ।

[सहस्रपत्रचक्रं तत्स्वरूपं तत्रत्यविशेषाश्च]

चक्रं सहस्रपत्रं तु ब्रह्मरन्ध्रे सुधामयम् ॥ १५० ॥
तत्सुधासारधाराभिरभिवर्धयते तनुम् ।

[पिण्डस्य ब्रह्माण्डसादृश्यम्]

ब्रह्माण्डे ये पदार्थाः स्युस्ते शरीरे व्यवस्थिताः ॥ १५१ ॥

---

1. द्विदलं-मु. पा.
2. फलात्मकम्-मु.

पातालं भूधरा लोकाः तथाऽन्ये द्वीपसागराः ।
आदित्यादिग्रहास्सर्वे पिण्डमध्ये व्यवस्थिताः ॥ १५२ ॥

[चतुर्दशलोकानां पिण्डेऽन्तर्भावः]

पादाधस्त्वतलं विद्यात्पादोर्ध्वे वितलं तथा ।
जङ्घयोस्सुतलं ज्ञेयं प्रतलं जानुनोर्द्वयोः ॥ १५३ ॥

तलातलमथोर्वोस्तु गुह्यस्थाने रसातलम् ।
पातालं कटिसन्धौ तु [1] पादादौ लक्षयेद्बुधः ॥ १५४ ॥

भूर्लोको नाभि[2]मध्ये तु भुवर्लोको हृदि स्थितः ।
स्वर्लोकः कण्ठदेशे तु महर्लोकस्तु तालुके ॥ १५५ ॥

जनलोकस्तदूर्ध्वे तु तपोलोको ललाटके ।
सत्यलोकः शिरस्येवं भुवनानि चतुर्दश ॥ १५६ ॥

[पिण्डे सप्तकुलपर्वतावस्थितिः]

त्रिकोणे संस्थितो मेरुरधःकोणे तु मन्दरः ।
कैलासो दक्षिणे कोणे वामकोणे हिमालयः ॥ १५७ ॥

निषधश्चोर्ध्वभागे च दक्षिणे गन्धमादनः ।
विन्ध्यस्तु रोमरेखायां सप्तैते कुलपर्वताः ॥ १५८ ॥

[जम्ब्वादिद्वीपानां पिण्डेऽवस्थितिः तत्स्थानानि च]

अस्थिस्थाने स्थितो जम्बुर्मेधस्थः प्लक्षसञ्ज्ञकः ।
कुशद्वीपः स्थितो मांसे क्रौञ्चद्वीपास्सुरासु च ॥ १५९ ॥

---

1. पादादीन्–छ.
2. देशे–बी. कौ.

त्वचि स्याच्छाल्मलीद्वीपो गोमेदो रोमसञ्चये ।
नखस्थं पुष्करं विन्द्यात्

[पिण्डे मूत्रादीनां सप्तसागररूपता]

सागरास्तदनन्तरम् ॥ १६० ॥

क्षारोदश्च तथा मूत्रे रसे क्षीरोदसागरः ।
दध्यर्णवः श्लेष्ममध्ये मज्जायां सर्पिरर्णवः ॥ १६१ ॥

रसोदधिर्वे[1]सान्ते च शोणिते च सुरोदधिः ।
[2]स्वादूदो लम्बिकास्थाने गर्भोदस्सप्तसागराः ॥ १६२ ॥

[ग्रहाणां पिण्डे अवस्थानक्रमः]

नादचक्रे स्थितस्सूर्यो बिन्दुचक्रे च चन्द्रमाः ।
नेत्रयोश्च कुजो ज्ञेयो हृदये च बुधः स्थितः ॥ १६३ ॥

गुह्यस्थाने गुरुं विन्द्याच्छुक्रे शुक्रः समाश्रितः ।
नाभिस्थाने स्थितो मन्दो मुखान्ते राहुराश्रितः ॥ १६४ ॥

नादस्थाने स्थितःकेतुरश्विन्याद्यास्त्रयस्त्रयः ।
विभवश्च समाख्यातः आपादतलमस्तकम् ॥ १६५ ॥

[पिण्डे पञ्चभूतनायकानां अवस्थानं पिण्डोत्पत्तिप्रयोजनोक्तिश्च]

हृदि स्थाने स्थितो ब्रह्मा कण्ठे विष्णुस्समाश्रितः ।
भ्रूमध्ये संस्थितो रुद्रः [3]तदूर्ध्वे च स्वरस्स्मृतः ॥ १६६ ॥

---

1. नान्ते-वी. कौ.
2. स्वादोधो-वी. कौ.
3. तस्योर्ध्वे-वी. कौ., तनूर्ध्वे-ग.

सदाशिवो ललाटान्ते पञ्चैते भूतनायकाः ।
एवं ब्रह्माण्डसंस्थानं पिण्डाण्डेऽपि व्यवस्थितिः ॥ १६७ ॥

शरीरमीदृशं कर्मवशात्समुपजायते ।
तत्फलानुभवार्थं हि देवेनैव विनिर्मितम् ॥ १६८ ॥

ईदृक्छरीरमासाद्य यस्तु तत्त्वं विभावयेत् ।
तस्यैव च परानन्दः परेषां दुःखसन्ततिः ॥ १६९ ॥

इति शिवतत्त्वरत्नाकरे नवमकल्लोले पिण्डोत्पत्तिनिरूपणं नाम प्रथमस्तरङ्गः

—o—

## नवमकल्लोले द्वितीयस्तरङ्गः

—o—

[आबाल्यात् वार्धक्यान्तं देहिनः सुखानुभवोऽस्ति नवेति
कुमारप्रश्नः महीपालोत्तरं च]

भगवन्! गर्भवासे च निर्गमे चापि देहिनः ।
जायते सुमहद्दुःखमिति पूर्वं निरूपितम् ॥ १ ॥

अतः परं वा बाल्यादिस्थविरान्तवयस्स्वपि ।
सुखस्यानुभवो लोके नराणां विद्यते न वा ॥ २ ॥

अधुना संशयो भूया[1]नस्मिन् मनसि वर्तते ।
निरूपयेदं सर्वं मे संशयं विनिवर्तय ॥ ३ ॥

[जन्मजराजर्झरितस्य देहिनः सुखानुभवः कुतः]

यत्पृष्टं भवता पुत्र! तद्ब्रवीमि सुधीः श्रृणु ।
पुंसां वर्षशतं ह्याहुः तस्यार्धं निद्रया गतम् ॥ ४ ॥

तरङ्गवद्वारिराशेः सम्पदः क्षणभङ्गुराः ।
दिनानि त्रीणि चत्वारि नराणां यौवनं स्मृतम् ॥ ५ ॥

दुःखं जन्म जरादुःखं दुःखं मृत्युः पुनः पुनः ।
एवंविधस्य जीवस्य सुखस्यानुभवः कुतः[2] ॥ ६ ॥

[बाल्यावस्थायां सुखानुभवभावनिरूपणम्]

अव्यक्तेन्द्रियवृत्तित्वाद्बाल्ये दुःखं महत्पुनः ।
इच्छन्नपि न शक्नोति वक्तुं कर्तुं च तत्क्रियाम् ॥ ७ ॥

---

1. नस्ति मे मनसि प्रभो–मु.
2. आदितः 'सुखस्यानुभवः कुतः' इत्यन्तं वी. मा. कोशे नास्ति ।

दन्तो[1]त्थाने महद्दुःखं [2] अल्पेन व्याधिना ततः ।
बालरोगैश्च विविधैः पीडा बालग्रहैरपि ॥ ८ ॥

तृड्बुभुक्षापरीताङ्गः क्वचित्तिष्ठति [3] चारटन् ।
विण्मूत्रभक्षणाद्यं च मोहाद्बालः समाचरेत् ॥ ९ ॥

कौमारे कर्णवेधेन मातापित्रोश्च ताडनात् ।
अक्षराध्ययनाद्यैश्च दुःखं स्याद्गुरुशासनात् ॥ १० ॥

[यौवने सुखाणुरपि नास्तीति निरूपणम्]

प्रमत्तेन्द्रियवृत्तित्वात्कामरोगप्रपीडनात् ।
[4] रागोद्वृत्तस्य सततं कुतस्सौख्यं हि यौवने ॥ ११ ॥

नेत्रस्य [5] क्षुभितस्यैव रागो दुःखाय केवलम् ।
न रात्रौ विन्दते निद्रां कामाग्निपरिपीडितः ॥ १२ ॥

दिवा चापि कुतः सौख्यमर्थोपार्जनचिन्तया ।
स्त्रीष्वायासि[6]तदेहस्य ये पुंसः शुक्लबिन्दवः ॥ १३ ॥

न ते सुखाय मन्तव्याः स्वेदजा इव बिन्दवः ।
क्रिमिभिस्तुद्यमानस्य कुष्ठिनः पामनस्य वा ॥ १४ ॥

---

1. ध्यावे–ग.
2. मूलेन–ग.
3. रारटन्–वी. मा.
4. तद्ग्राहेस्तु–वी. मा.
5. कुपित–वी. मा.
6. ससमेतस्य–ग.

कण्डूयनाग्नि[1]तापाभ्यां यत्सुखं स्त्रीषु तद्विदुः ।
यादृशं [2] विद्यते सौख्यं [3] कण्डूपूयविनि[4]र्गमे ॥ १५ ॥

तादृशं स्त्रीषु विज्ञेयं नाधिकं तासु विद्यते ।
ग्रन्थेस्तु वेदना यद्वत्स्फुटितस्य निवर्तते ॥ १६ ॥

तद्वत्स्त्रीष्वपि विज्ञेयं नाधिकं तासु विद्यते ।
नारीष्ववस्थाभूतासु सर्वदोषाश्रयासु च ॥ १७ ॥

न चाणुमात्रमप्येवं सुखमस्ति विचारतः ।
सन्मानं चावमानेन वियोगेनेष्टसङ्गमः ॥ १८ ॥

यौवनं जरया ग्रस्तं क्व सौख्यमनुपद्रवम् ।

[पुरुषार्थसाधनयोग्यजरायां सुखानुभवाभावकथनम्]

[5] कलीपलितरो[6]गार्तिरधरीकृतदेहयोः ॥ १९ ॥

दम्पत्योर्यौवने रूपं यच्चान्योन्यं प्रियं पुरा ।
तदेव जरया ग्रस्तमुभयोरपि न प्रियम् ॥ २० ॥

अपूर्ववत्स्वमात्मानं जरया परि[7]वर्तितम् ।
यः पश्यन्नविरज्येत कोऽन्यस्तस्मादचेतनः ॥ २१ ॥

जराभिभूतपुरुषः पत्नीपुत्रादिबान्धवैः ।
अशक्तत्वा[8]द्दुराचारैः भृत्यैश्च परिभूयते ॥ २२ ॥

---

1. तापाख्यां–ग.
2. मन्यते–वी. मा.
3. गण्डे–वी. मा.
4. मात्–वी. मा.
5. दरी–ग.
6. रसालित्यैः–वी. मा.
7. वर्जितम्–ग.
8. न्नाद्रियते–वी. मा.

[यौवने धर्माचरणावश्यकता]

धर्मश्चार्थश्च कामश्च मोक्ष[1]श्चैव न जीर्यता ।
[2]शक्याः साधयितुं तस्माद्युवा धर्मं समाचरेत् ॥ २३ ॥

[प्रसङ्गात् व्याधिस्वरूपनिरूपणम्]

वातपित्तकफादीनां वैषम्याद्व्याधिरुच्यते ।

[शरीरस्य व्याधिमयत्वनिरूपणम्]

वातादीनां समूहश्च देहोऽयं परिकीर्त्यते ॥ २४ ॥

तस्माद्व्याधिमयं ज्ञेयं शरीरमिदमात्मनः ।
रोगैर्नानाविधैर्याति देहो दुःखान्यनेकधा ॥ २५ ॥

तान्येव स्वात्मवेद्यानि किमन्यत्कथयाम्यहम् ।

[शरीरस्यानेकरोगाधिष्ठितत्वं तत्र कालमृत्योरपरिहार्यता च]

एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम् ॥ २६ ॥

तत्रैकः कालसंज्ञः स्याच्छेषास्त्वागन्तुकाः स्मृताः ।
ये चा[3]त्रागन्तवः प्रोक्तास्ते च शाम्यन्ति भेषजैः ॥ २७ ॥

जपहोमप्रदानैश्च कालमृत्युर्न शाम्यति ।

[मृत्युद्वाराणि मृत्योस्सर्वथाऽपरिहार्यता च]

विविधा व्याधयः शस्त्रं सर्पाद्याः प्राणिनस्तथा ॥ २८ ॥

विषाणि चाभिचारश्च मृत्योर्द्वाराणि देहिनाम् ।
[4]पीडितं स[5]र्पशस्त्राद्यैरपि धन्वन्तरिः स्वयम् ॥ २९ ॥

---

1. चाति जरत्यतः–वी. मा.
2. अशक्तः–वी. मा.
3. चात्रागन्तुकाः–मु.
4. पण्डितः–वी. मा.
5. सर्वे–वी. मा.

[1] स्वस्थीकर्तुं न शक्नोति कालप्राप्तं हि देहिनाम् ।
नौषधं न तपो दानं न मन्त्रा न च बान्धवाः ॥ ३० ॥

शक्नुवन्ति परित्रातुं नरं कालप्रपीडितम् ।
रसायनतपोजप्ययोगसिद्धैर्महात्मभिः ॥ ३१ ॥

कालमृत्युरपि [2] प्राज्ञैर्जीयते [3] नालसैर्नरैः ।

[मृत्युसमं दुःखं नास्तीति निरूपणम्]

नास्ति मृत्युसमं दुःखं नास्ति मृत्युसमं भयम् ॥ ३२ ॥

सद्भार्या पुत्रमित्राणि राज्यैश्वर्यसुखानि च ।
आबद्धानि च वैराणि मृत्यु[4]स्सर्वाणि हन्ति हि ॥ ३३ ॥

[आयुषः पूर्वकर्मानुगणतया जीवितकालस्याल्पीयस्त्वम्]

हे जनाः! किं न पश्यध्वं सहस्रेष्वपि मध्यतः ।
जनाश्शतायुषः पञ्च भवन्ति न भवन्ति वा ॥ ३४ ॥

अशीतिकाश्च विद्यन्ते केचित्सप्ततिका नराः ।
परमायुस्स्थिति[5]ष्षष्टिः तदप्यायुर्न निश्चितम् ॥ ३५ ॥

यस्य यावद्भवेदायुर्देहिभिः पूर्वकर्मभिः ।
तस्यार्धमायुषो रात्रिर्हरते त्वमृतोपमा [6] ॥ ३६ ॥

बालभावे च मोहेन वार्धके जरया तथा ।
वर्षाणां विंशतिर्याति धर्मकामार्थवर्जिता ॥ ३७ ॥

---

1. स्वास्थ्यं–वी. मा.
2. प्राप्तो–मु.
3. श्नल–मु.
4. मृत्युः सर्वं विनाशयेद्–मु.
5. पुष्टिः–वी. मा.
6. तेऽत्र मृतोपमा–मु.

आगन्तुकै[1]र्भयैः पुंसां व्याधिशोकैरनेकधा ।
हीयतेऽर्धं च तत्रापि यच्छेषं तद्धि जीवितम् ॥ ३८ ॥
जीवितान्ते च मरणं महाघोरमवाप्नुयात् ।

[मृतानां कर्मानुसारेण पुनर्जन्मप्राप्तिः मरणस्वरूपं च]

जायते कोटियोनीषु [2] मृताः कर्मवशात्पुनः ॥ ३९ ॥
देशभेदेन यः पुंसां वियोगः कर्मसंक्षयात् ।
मरणं तद्विनिर्दिष्टं न नाशः परमार्थतः ॥ ४० ॥

[मरणकालिका व्यापाराः]

महा[3]तमः प्रविष्टः स्याच्छि[4]द्यमानेषु मर्मसु ।
यद्दुःखं मरणे जन्तोर्न [5]तस्येह समं क्वचित् ॥ ४१ ॥
हा! माताहा! पितः! कान्ते क्रन्दत्येवं सुदुःखितः ।
मण्डूक इव सर्पेण ग्रस्यते मृत्युना जगत् ॥ ४२ ॥
बान्धवैश्च परिष्वक्तः प्रियैश्च परिवारितः ।
निश्वसन् दीर्घमुष्णं च मुखेन परिशुष्यता ॥ ४३ ॥
चतुर्ष्वन्तेषु खट्वायाः परि[6]वृत्य मुहुर्मुहुः ।
संमूढः क्षिपतेऽत्यर्थं हस्तपादा[7]नितस्ततः ॥ ४४ ॥

---

1. भवैः–मु.
2 पुनः–ग.
3. रामः–मु., रमः–ग.
4. द्र–ग.
5. तस्य ह्युपमा–वी. मा., हो समा–ग.
6. वर्त्यं–वी. मा.
7. दामी–मु.

खट्वाया वाञ्छते भूमिं भूमेः खट्वां ततो महीम् ।
विवस्त्रस्त्यक्तलज्जश्च मूत्रविष्ठापरिप्लुतः ॥ ४५ ॥

[1]याचमानश्च सलिलं शुष्ककण्ठो[2]ष्ठतालुकः ।
[3]चिन्तयानश्च वित्तानि कस्यैतानि मृते मयि ॥ ४६ ॥

[4]सर्वाङ्गैश्च [5]खनन् भूमिं कालपाशेन कर्षितः ।
म्रियते पश्यतामेव गले घुरुघुरायते ॥ ४७ ॥

जीवः तृणजलूकावद्देहाद्देहं [6]विनिर्दिशेत् ।

[दुःखपरम्परावर्णनम्]

संप्राप्योत्तर[7]मंशेन देहं त्यजति पौर्विकम् ॥ ४८ ॥

मरणात्प्रार्थनादुःखमधिकं हि विवेकिनः ।
क्षणिकं मरणे दुःखमनन्तं प्रार्थनाकृतम् ॥ ४९ ॥

जगतां पतिरर्थित्वाद्विष्णुर्वामनतां गतः ।
अधिकः कः परस्तस्माद्यो न यास्यति लाघवम् ॥ ५० ॥

न परं प्रार्थयेद्भूयः तृष्णा लाघवकारणम् ।
आदौ दुखं तथा मध्ये दुःखमन्ते सुदारुणम् ॥ ५१ ॥

निसर्गात्सर्वभूतानामिति दुःखपरम्परा ।
वर्तमानान्यतीतानि दुःखान्येतानि यानि तु ॥ ५२ ॥

---

1. प्रीतमात्रोऽपि-वी. मा.
2. स्वता-मु.
3. चिन्त्यमानश्च-वी. मा.
4. नखाङ्गै-मु.
5. नेद्भू-वी. मा.
6. विशेत्क्रमाद्-वी. मा., विशेद्बलौ-मु.
7. मंशे च-मु.

[1]नराः स्वभावं यन्त्यज्ञा न विरज्यन्ति तेन ते ।

[क्षुधायाः सर्वव्याधिसार्वभौमत्वनिरूपणं तदुपशमनप्रकारश्च]

अत्याहारान्महद्दुःखमनाहारान्महद्भयम् ॥ ५३ ॥

क्षुधा हि सर्वरोगाणां व्याधिः श्रेष्ठतमः स्मृतः ।
स चान्नौष[2]धयोगेन क्षणमात्रेण शाम्यति ॥ ५४ ॥

क्षुद्व्याधिवेदना तीव्रा निश्शेषबलकृन्तनी ।
[3]तयाऽभिभूतो म्रियते यथान्यैर्व्याधिभिर्नरः ॥ ५५ ॥

षड्रसेनापि किं तेन जिह्वान्तः परिवर्तिना ।
यत् क्षणार्धार्धकालेन कण्ठं प्राप्यातिवर्तते ॥ ५६ ॥

इति क्षुद्व्याधितप्तानामन्नमौषधवत्स्मृतम् ।
न तत्सुखाय मन्तव्यं पण्डितैः परमार्थतः ॥ ५७ ॥

मृतोपमश्च [4]यश्शेते सर्वकार्यविवर्जितः ।
तस्यापि न कुतस्सौख्यं तमसाऽ[5]च्छादितात्मनः ॥ ५८ ॥

कृषिवाणिज्यसेवाध्वगोरक्षादिपरिश्रमैः ।
प्रातर्मूत्रपुरीषाद्यैः मध्याह्ने क्षुत्पिपासया ॥ ५९ ॥

तृप्ताः कामेन बाध्यन्ते निद्रया निशि जन्तवः ।
शीतेन दुखं हेमन्ते ग्रीष्मे तापेन दारुणम् ॥ ६० ॥

---

1. न रास–ग., नरा न भावाय–वी. मा.
2. धिलेपेन–वी. मा.
3. तथा–ग., तदा–वी. मा.
4. स्वयं–वी. मा.
5. भाविता–मु.

वर्षासु वातवर्षाभ्यां कालेप्येवं कुतस्सुखम् ।

[अर्थार्जन-रक्षणादीनां बहुक्लेशकरत्वनिरूपणम्]

अर्थानामार्जने दुखं आर्जितानां च रक्षणे ॥ ६१ ॥
[1] आये दुःखं व्यये दुःखं [2] अर्थेप्येवं कुतस्सुखम् ।
चोरेभ्यः सलिलादग्नेः स्वजनात्पार्थिवादपि ॥ ६२ ॥
भयमर्थवतां नित्यं मृत्युर्देहभृतामिव ।
खे यथा पक्षिभिर्मांसं भक्ष्यते श्वापदैर्भुवि ॥ ६३ ॥
जले च भक्ष्यते मत्स्यैः तथा सर्वत्र वित्तवान् ।
[3] विमोहयन्ति संपत्सु तापयन्ति विपत्तिषु ॥ ६४ ॥
क्लेशयन्त्यार्जने काले कदा [4] ह्यर्थास्सुखावहाः ।
यश्चार्थपतिरुद्विग्नो यश्च सर्वार्थनिस्पृहः ॥ ६५ ॥
तयोरर्थपतिर्दुःखी सुखी सर्वार्थनिस्पृहः ।

[कुटुम्बचिन्ताकुलितत्वादेव गार्हस्थ्यस्यापि दुःखकरत्वनिरूपणम्]

विवाहावसरे दुःखं तद्गर्भोद्वहनेषु च ॥ ६६ ॥
प्रसवेऽपत्यदोषे च दुःखं विष्ठादि कर्मभिः ।
दन्तादिरोगे पुत्रस्य ह! कष्टं किं करोम्यहम् ॥ ६७ ॥
गावो नष्टाः कृषिर्भग्ना काप्यश्वाः प्रपलायिताः ।
[5] अहो! प्रा[6]घुणिकाः प्राप्ता भग्नं छिद्रं च मे गृहम् ॥ ६८ ॥

---

1. नाशे–ग.
2. कथमर्थाः सुखावहाः.
3. संमोह–वी. मा.
4. त्वयाः–ग.
5. अमी–नी. मा.
6. पाहुणि–ग.

बाला[1]पत्या च मे भार्या कः करिष्यति साधनम् ।
प्रदानकालः कन्यायाः सदृशः को वरो भवेत् ॥ ६९ ॥

इति चिन्ताभिभूतानां कुतस्सौख्यं कुटुम्बिनाम् ।

[कुटुम्बिनां श्रुताद्यनुपयोगः]

कुटुम्बचिन्ताकुलितस्य पुंसः
श्रुतं च शीलं च गुणाश्च सर्वे ।
अपक्वकुम्भे निहिता इवापः
प्रयान्ति देहेन समं विनाशम् ॥ ७० ॥

[दुःखास्पदस्य सर्वदेहिसाधारण्यं तिरस्कृताखिलविषयस्य सुखसंपत्तिश्च]

[2]सजातीयाद्भयं प्रायः सर्वेषामेव देहिनाम् ।
एकद्रव्यभिलाषित्वाच्छुनामिव परस्परम् ॥ ७१ ॥

[3]नाप्यदृश्यबलः कश्चिन्नृपः ख्यातोऽस्ति भूतले ।
निखिलं यस्तिरस्कृत्य सुखं तिष्ठति निर्भयः ॥ ७२ ॥

[राज्ञोऽपि विचारतः सर्वविषयाणां दुःखजनकता]

राज्येऽपि सुमहद्दुःखं सन्धिविग्रहचिन्तया ।
पुत्रादपि भयं यत्र तत्र सौख्यं हि कीदृशम् ॥ ७३ ॥

[4]एकं वस्त्रयुगं राज्ञः [5]प्रस्थमात्रान्नभोजनम् ।
यानं शय्यासनं चैकं शेषं दुःखाय केवलम् ॥ ७४ ॥

---

1. लाहत्या-वी. मा.
2. स्व-वी. मा.
3. सोप्य-वी. मा.
4. एवं-वी. मा.
5. प्रस्थात्पात्रान्न-मु.

सार्वभौमोऽपि भवने खट्वा[1]प्रान्तपरिग्रहः ।
प्रत्यूषे तूर्यनिर्घोषः समः परनिवासिनः ॥ ७५ ॥

[2]राज्ञोऽभिमानमात्रं हि ममायं विद्यते गृहे ।
सर्वमाभरणं भारः सर्वमालेपनं मलम् ॥ ७६ ॥

सर्वं [3]गीतं प्रलपितं नृत्तमुन्मत्तचेष्टितम् ।
इत्येवं राज्यभोगेषु कुतस्सौख्यं विचारतः ॥ ७७ ॥

नृपाणां व्यग्रचित्तानामन्योन्यविजिगीषया ।

[दिवौकसामपि विचारे सुखाभावः]

प्रायेण श्रीमदालेपा[4]न्नहुषाद्या महाबलाः ॥ ७८ ॥

स्वर्गं प्राप्यापि पतिताः कःश्रिया विन्दते सुखम् ।
स्वर्गेऽपि हि कुतस्सौख्यं दृष्ट्वा दीप्तं [5]वरश्रियम् ॥ ७९ ॥

उपर्युपरिदेवाना[6]मन्योन्यातिशयेच्छया ।
नरैः पुण्यफलं स्वर्गे मूलच्छेदेन भुज्यते ॥ ८० ॥

नाचान्यत्क्रियते कर्म तत्र वासः सुदारुणः ।
छिन्नमूलस्तरुर्यद्वदवश्यं पतति क्षितौ ॥ ८१ ॥

[7]क्षीणे पुण्यफले तद्वद्वा [8]पतन्ति दिवौकसः ।
सुखाभिलाषनिष्ठानां दुःखभोगार्थसंप्लवात् ॥ ८२ ॥

---

1. माश्र-वी. मा.
2. राजा-वी. मा.
3. नीतं-ग.
4. भोगं भुक्त्वा-वी. मा.
5. पर-वी. मा.
6. सर्वेसातिशयाः स्थिताः-वी. मा.
7. पुण्यमूलास्तथा-ग.
8. विशन्ति-सु.

अकस्मात्पतना[1]त्सर्वं कष्टं दुःखं दिवौकसाम् ।
इति स्वर्गेऽपि देवानां नास्ति सौख्यं विचारतः ॥ ८३ ॥
[2] क्षयात्सातिशयं दुःखं स्वर्गभोगीयकर्मणि ।

[ नारकिणां दुःखस्वरूपनिरूपणम् ]

ततः कष्टं महद्दुःखं नरकाग्निषु देहिनाम् ॥ ८४ ॥
घोरैश्च विविधैः पापैर्वाङ्मनःकायसम्भवैः ।
कुठारैश्छेदनं तीव्रं [3] सकलानां च [4] भक्षणम् ॥ ८५ ॥
पर्णशाखाफलानां च पातनं चण्डवायुना ।
उन्मूलनं प्रमर्दश्च गजैरन्यैश्च [5] जन्तुभिः ॥ ८६ ॥
दावाग्निपात[6]शोषैश्च दुःखं स्थावरजातिषु ।
वर्षाशीतातपैर्दुःखं [7] तिरश्चां प्राणिनामपि ॥ ८७ ॥
क्षुत्तृट्[8]क्लेशेन महता [9] ताडनैर्बन्धनैरपि ।
वेणुकुन्तादिनिगलमुद्गरा[10]ङ्कुशबाधनम् ॥ ८८ ॥
भारोद्वहनसङ्क्लेशशिक्षायुद्धादिपीडनम् ।
आत्मयूथवियोगश्च वनानयनबन्धनम् ॥ ८९ ॥

---

1. स्वर्गे–वी. मा.
2. स्वर्गक्षयादतिशयात्–ग.
3. वल्कला-वी. मा.
4. तत्क्षण–वी. मा.
5. देहिभिः–ग.
6. शोषै–वी. मा., दो–मु.
7. सुकष्टं सर्वपक्षिणाम्–वी. मा.
8. केश–ग.
9. सून्तसाश्च सदामृगाः–वी. मा.
10. शुग–मु.

पशुनाग[1]निकायानामेवं दुःखान्यनेकधा ।
इत्येवमादिभिर्दुःखैः जगद्व्याप्तं चराचरम् ॥ ९० ॥

[रोगस्यौषधवत् संसारस्य शिवापोह्यता]

व्याधीनां भेषजं यद्वत्प्रतिपक्षं स्वभावतः ।
तद्वत्संसारदुःखानां प्रतिपक्षश्शिवः स्मृतः ॥ ९१ ॥

[भवदोषनिवारणार्थं गुरूपदेशतः शिवज्ञानार्जनस्यावश्यकर्तव्यता]

तस्मादात्मविचारेण भवदोषविवर्जितः ।
तत्त्वानामन्तराज्ञानान्न स्यादात्मविचारणा ॥ ९२ ॥

विचारायात्मना ज्ञानं तत्त्वानामप्यपेक्षितम् ।
शिवज्ञानयुतं शान्तं महापातकनाशनम् ॥ ९३ ॥

प्रणिपत्य गुरुं तस्मात्प्रार्थये[2]द्बुद्धिमात्मनः ।
इति ज्ञानरहस्यं स प्रोवाच निजसूनवे ॥ ९४ ॥

इति शिवतत्त्वरत्नाकरे नवमकल्लोले संसारनिरसनं नाम
द्वितीयस्तरङ्गः

—o—

1. गादि जन्तूनामेव-मु.
2. येद्दहिता-मु.

## नवमकल्लोले तृतीयस्तरङ्गः

—o—

[तत्त्वस्वरूपप्रश्नः तदुत्तरोक्तिप्रतिज्ञा च]

आत्मज्ञाने तु तत्त्वानां ज्ञानं मुख्यमितीरितम् ।
कानि तानि च तत्त्वानि किं रूपाणि? कियन्ति वा? ॥ १ ॥

तन्ममाचक्ष्व भगवन्! यदि मय्यस्त्यनुग्रहः ।
कुमार! [1] यत्प्रश्नयसे? तद्ब्रूमोऽवहितः शृणु ॥ २ ॥

[स्थूलदेहोत्पत्तिः]

देहः स्थूलो जातिवंशाद्यभिमानास्पदं [2] तु यः ।
पृथिव्यप्तेजसां वायोर्व्योम्नश्च समवायजः ॥ ३ ॥

[प्राक्तनकर्मानुसारेण जीववैचित्र्यम्]

प्राचीनपुण्यपापानुरूपाद्रूपं दृशोः प्रियम् ।
इन्द्रियाणां पाटवं च बिभ्रतो नियतायुषः ॥ ४ ॥

दधाना ब्राह्मणादींश्च वर्णभेदाननेकधा ।
भजन्तः कर्मजन्यानि फलानि नियतानि च ॥ ५ ॥

आत्मानो जीवनामानो बहुवैचित्र्यशालिनः ।

[जीवानां प्रत्येकं भोगसाधनपृथिव्यादितत्त्वाश्रयता]

एतेषामिह जीवानां भोगे नियतसाधनम् ॥ ६ ॥

---

1. " यत्त्वया पृष्टाः " इत्येवं पाठो युज्यते ।
2. हि–मु.

पृथिव्यादीनि तत्त्वानि कलातत्त्वावधीनि च ।
त्रिंशत्तत्त्वानि विद्यन्ते प्रतिजीवं पृथक् ॥ ७ ॥

[कर्माश्रयसंसारिस्वरूपम्]

कृतानां पुण्यपापानां आश्रयोऽन्योऽस्ति देहतः ।
नित्यज्ञानक्रियारूपो व्यापको मूर्तिवर्जितः ॥ ८ ॥
अणुताकार्ममायेयबिन्दुरोधाख्यशक्तिभिः ।
पञ्चभिर्बध्यमानस्तु संसारी पुरुषो मतः ॥ ९ ॥

[तत्त्वानां भोगसाधनत्वं पृथिव्यादिपञ्चभूतानि च]

अस्य भोगे साधनानि तत्त्वानीमानि चक्ष्महे ।
पृथिव्यादिगगनान्तानि पञ्चभूतान्यतः परम् ॥ १० ॥

[पञ्चतन्मात्राणि तत्कार्यसङ्ख्या च]

गन्धो रसश्च रूपं च शब्दः स्पर्शश्च पञ्चमः ।
पञ्च तन्मात्रसंज्ञानि कार्याण्येतानि वै दश ॥ ११ ॥

[पञ्चकर्मेन्द्रियाणि तेषां व्यापाराश्च]

वाक् च पाणिश्च पादश्च पायुश्चोपस्थमित्यपि ।
कर्मेन्द्रियाणि पञ्चैषां गुणाः पञ्च प्रकीर्तिताः ॥ १२ ॥
व्याहारादानगमनविसर्गानन्दनामकाः ।

[पञ्चज्ञानेन्द्रियाणि तेषां विषयाश्च]

[1] श्रोत्रत्वग्दृष्टिरसनं घ्राणं ज्ञानेन्द्रियाणि हि ॥ १३ ॥
शब्दस्पर्शौ रूपरसगन्धाश्च विषया इह ।

[अन्तःकरणनामानि तेषां लक्षणानि च]

करणत्वेन विज्ञेया मनोहङ्कारबुद्धयः ॥ १४ ॥

---

1. श्रोत्रं हि त्वग्-मु.

क्रियाः प्रवर्तयन्त्यन्तः स्थित्वान्तःकरणं ततः ।
सङ्कल्पनं तथाऽर्थानां श्रोत्रादीनां बहिः स्थिते ॥ १५ ॥

प्रवर्तनं च विषये मनसो वृत्तिरिष्यते ।
अभिमानः प्रेरणं च वायूनां देहवर्तिनाम् ॥ १६ ॥

अहंकृतेर्गुणो बुद्धेः गुणस्त्वध्यवसायकः ।
इदं रजतमेवेति निश्चयोऽध्यवसायकः ॥ १७ ॥

एवमुक्तानि तत्त्वानि त्रयोविंशतिसङ्ख्यया ।

[अहङ्कारतत्त्वोत्पत्तिः तस्य त्रैविध्यं तन्नामानि च]

एतेषु बुद्धितत्त्वात्स्यादहङ्कारस्त्रिरूपवान् ॥ १८ ॥

सात्विको राजसश्चेति तामसश्चेति भेदतः ।

[सात्विकाद्अहङ्कारकार्याणि]

सात्विकादप्यहङ्कारान्मनोज्ञानेन्द्रियोद्भवः ॥ १९ ॥

राजसादपि वागादिकर्मेन्द्रियसमुद्भवः ।
तामसादपि तन्मात्रपञ्चकस्य समुद्भवः ॥ २० ॥

[पञ्चभूतानां उत्पत्तिः तेषां वृत्तयश्च]

तन्मात्रेभ्यश्च पञ्चभ्यः पञ्चभूतसमुद्भवः ।
धृतिः समूहीकरणं देहोऽवयवयोजनम् ॥ २१ ॥

अवकाशप्रदानं च भूतपञ्चकवृत्तयः ।

[पञ्चभूतानां साधारणासाधारणाश्च गुणाः]

पृथ्व्याश्शब्दस्पर्शरूपरसास्साधारणा गुणाः ॥ २२ ॥

गन्धो वैशेषिकोऽपां तु शब्दस्पर्शश्च रूपकम् ।
साधारणगुणा एते रसो वैशेषिको गुणः ॥ २३ ॥

रूपं तेजसस्सामान्यं शब्दस्पर्शावताद्दशौ ।
वायोस्साधारणश्शब्दः स्पर्शो वैशेषिको गुणः ॥ २४ ॥

आकाशे शब्द एवैको न वर्णात्मा प्रतिध्वनिः ।
द्वाविंशतेः परस्यास्य बुद्धितत्त्वस्य कारणम् ॥ २५ ॥

[गुणतत्त्वं तत्प्रभेदः तस्य सुखादिकारणता च]

गुणतत्त्वमिदं तत्त्वं रजस्तम इति त्रिधा ।
सुखदुःखविमोहानां त्रयाणां कारणं हि तत् ॥ २६ ॥

[गुणतत्त्वकारणं प्रकृतिगुणयोः स्थानं च]

अत्र प्रकृतितत्त्वं तु गुणतत्त्वस्य कारणम् ।
गुणतत्त्वं चतुर्विंशं प्रकृतिः पञ्चविंशकम् ॥ २७ ॥

स्वभिन्ना वस्त्वबुध्यादि त्रयोविंशतितत्त्वके ।
सुखे दुःखे च मोहे च गणतत्त्वं तु कारणम् ॥ २८ ॥

[अशुद्धाध्वतत्त्वानि]

अशुद्धाध्वेति भूम्यादि प्रकृत्यङ्गस्य नाम हि ।

[रागतत्त्वं तत्प्रयोजनं च]

अत ऊर्ध्वं रागतत्त्वं तस्य चैतत्प्रयोजनम् ॥ २९ ॥

प्रकृत्युद्भूतवस्तूनामात्मने यत्प्ररोचनम् ।

[नियतितत्त्वं तत्प्रयोजनं च]

अत ऊर्ध्वं नियत्याख्यं तत्त्वं स्यात्सप्तविंशकम् ॥ ३० ॥

कृतानि स्वेन कर्माणि स्वस्यानुभवसाधनम् ।
नापरस्येति नियमस्तस्य ज्ञेयं प्रयोजनम् ॥ ३१ ॥

[कालतत्त्वं तत्प्रयोजनं च]

अतः परं कालतत्त्वं तस्य चैतत्प्रयोजनम् ।
भोगेषु यः परिच्छेदो ह्रस्वो दीर्घोऽयमित्यपि ॥ ३२ ॥

[विद्यातत्त्वं तत्प्रयोजनं च]

अतः परं तु विन्द्वाख्यं तत्त्वमीरितमुत्तमम् ।
विषयेषूपरक्तो यो बुद्धिग्रहणकारणम् ॥ ३३ ॥

[कलातत्त्वं तत्प्रयोजनं च]

तस्मात्परं कला तत्त्वं ताम्रे नैल्यं यथास्थिरम् ।
तथात्मनिर्मलं स्वच्छं इति धीस्तत्प्रयोजनम् ॥ ३४ ॥

[कलातत्त्वोद्भूततत्त्वानि]

मायातत्त्वस्य कार्येऽस्मिन् तत्त्वे प्रकृतिरागयोः ।
विद्यायाश्च समुत्पत्तिः कलास्संज्ञे व्यवस्थितः ॥ ३५ ॥

[मायातत्त्वोद्भूततत्त्वानि]

नियतेः कालकलयोः मायातत्त्वे समुद्भवः ।

[पञ्चकञ्चुकनामानि]

कलाविद्याकालरागाः नियतिः पञ्चकञ्चुकम् ॥ ३६ ॥

[पुरुषतत्त्वम्]

एतद्वृत्तस्य बोध्यस्य पुंस्वरूपमलावृतेः ।
पुरुषव्यपदेशोऽत आत्मनो जडरूपता ॥ ३७ ॥

[मिश्राध्वपञ्चकम्]

आरागादाकलातत्त्वं मिश्राध्वाख्यं तु पञ्चकम् ।

[एकत्रिंशत्तत्त्वानां देहिसूक्ष्माङ्गता, मायाकार्यता, मायास्वरूपं च]

एकत्रिंशदिमान्येव सूक्ष्माङ्गं देहिनां पृथक् ॥ ३८ ॥

एतेषामपि सर्वेषां कारणत्वेन कीर्तितम् ।
अशुद्धमायातत्त्वं तु नित्यं व्यापकमेव च ॥ ३९ ॥

सर्वात्मकर्मसंबन्धं स्ववृत्तिद्वारतोऽखिलम् ।
प्रकाशयेदपि स्वैरं मोहकं जगतामिदम् ॥ ४० ॥

[विद्यातत्त्वम्]

ततः परं च द्वात्रिंशं विद्यातत्त्वमितीरितम् ।

[ईश्वरतत्त्वम्]

ततः परं त्रयस्त्रिंशमुदितं तत्त्वमैश्वरम् ॥ ४१ ॥

[मन्त्रादीनां शुद्धविद्यातत्त्वसंबन्धः]

शुद्धविद्याख्यतत्त्वेऽस्मिन् मन्त्राणां सप्तकोटयः ।
अष्टाविंशतिसङ्ख्याकाः कामिकाद्याश्च संहिताः ॥ ४२ ॥

नन्द्यादयोऽष्टौ गणपाः सिद्धा[1]स्तैः परिपूजिताः ।
इन्द्रादिलोकपालाश्च वज्रादीन्यायुधानि च ॥ ४३ ॥

[ईश्वरतत्त्वनिवासिनः]

ईश्वराख्ये तु विद्येशाः सङ्कर्षानन्तपूर्वकाः ।

[ईश्वरस्य मायाक्षोभणद्वारा सर्वमायेयस्रष्टृत्वम्]

एतासां चापि विद्यानां विद्यातत्त्वनिवासिनाम् ॥ ४४ ॥

अन्येषां चेश्वरोऽनन्तो मायाक्षोभकरश्च सः ।
मायेयतत्त्वभुवनसृष्टिकर्ता स एव हि ॥ ४५ ॥

---

1. द्यैः-मु.

[ईश्वरस्वरूपम्]

अयमेकमलश्चैव भिन्नश्च परमेश्वरात् ।
जायन्ते मलपा[1]केशा ईशानुग्रहगोचराः ॥ ४६ ॥

[रुद्रविभागः तत्र श्रीकण्ठरुद्रस्य भुवनसृष्ट्यादिकर्तृत्वमितरेषां तत्तत्कार्याधिपत्यं च]

रुद्रास्त्वाणवकार्माख्यमलद्वितयसंयुताः ।
अनेन सृष्टिप्रलयौ कलाख्ये चात्मसञ्चये ॥ ४७ ॥

मलपाकयुताश्चाष्टादशाभ्यधिकतां गताः ।
शतं रुद्रास्तु परमेश्वरानुग्रहगोचराः ॥ ४८ ॥

शतेष्वपि च रुद्रेषु रुद्रः श्रीकण्ठनामकः ।
प्रलयान्ते प्रकृत्याख्यादर्वाक्तत्त्वेषु संस्थितः ॥ ४९ ॥

भुवनानां च निर्माता आणवादित्रिपाशिनाम् ।
आत्मनां सकलाख्यानां सञ्चयेध्ययनादिभिः ॥ ५० ॥

उपास्यमानो ब्रह्मादिपदनिर्वाहकस्तथा ।
मध्यमप्रलये चास्य रागतत्त्वे व्यवस्थितिः ॥ ५१ ॥

सृष्टिकाले तु अशुद्धाध्वसृष्टिपूर्वकमेव हि ।
ब्रह्मविष्ण्वोरधिष्ठाता ततोऽर्वाग्भुवनेश्वरान् ॥ ५२ ॥

त्रयस्त्रिंशत्कोटिदेवान् ब्रह्माण्डं च सृजत्यसौ ।
अण्डे चतुर्दशैतस्मिन् भुवनानि वसन्ति हि ॥ ५३ ॥

ते लोका जीवराशीनां निवासस्थलमीरिताः ।
पूर्वोक्तेषु च रुद्रेषु रुद्रास्तु शतसङ्ख्यकाः ॥ ५४ ॥

---

1. केसा–ग.

पाञ्चभौतिकमुन्मुच्य ब्रह्माण्डं क्षितितत्त्वके ।
स्थित्वा ब्रह्माण्डसंरक्षां रचयन्ति समन्ततः ॥ ५५ ॥

गुणाख्ये ब्रह्मविष्णुभ्यां रुद्रभट्टारकः स्थितः ।
मध्यप्रलयपर्यन्तमधिकारं विधाय सः ॥ ५६ ॥

ब्रह्मविष्णू च संहृत्य मिश्राध्वपदगोचरम् ।
स्वयं रागाभिधानं तु तत्त्वमाश्रित्य तिष्ठति ॥ ५७ ॥

अनेन सह रुद्रेण वीरभद्रश्च तिष्ठति ।
प्रकृतेर्मस्तके चाष्टौ कलाया मस्तके तथा ॥ ५८ ॥

श्रीकण्ठवीरभद्रौ द्वावष्टकद्वितयाधिपौ ।
एवमष्टादशान्ये च शतं ब्रह्माण्डरक्षकाः ॥ ५९ ॥

ईश्वरेणानुगृह्यन्ते शतमष्टादशाधिकम् ।
आत्मकर्तृकसंप्रज्ञानयोगाभ्यासबलेन तु ॥ ६० ॥

ब्रह्मविष्ण्वादिपदवीमपि संपादयन्ति ते ।

[रुद्राणां मलपरिपाके दीक्षादिनेश्वरानुग्रहात्पदप्राप्तिः]

एतेषामपि रुद्राणां फलस्य परिपाकतः ॥ ६१ ॥

पदप्राप्तिर्दीक्षयाऽनुग्रहान्माहेश्वराद्भवेत् ।
प्रसादादैश्वराच्छुद्धविद्यातत्त्वनिवासिनाम् ॥ ६२ ॥

मलस्य परिपाके तु पदप्राप्तिः प्रजायते ।

[विद्येश्वराणां लक्षणं, तेषां ध्येयस्वरूपादिकं च]

विद्येश्वराणामेतेषां स्वरूपं स्यात्तु बैन्दवम् ॥ ६३ ॥

एतेषामिह रुद्राणां मायेयं स्याच्छरीरकम् ।
ब्रह्मविष्ण्वादिकानां तु शरीरं प्राकृतं मतम् ॥ ६४ ॥

उदीरितानां रुद्राणां विद्येशानामशेषतः ।
स्वरूपमिह रूपं तु ध्येयं पूज्यं महेशितुः ॥ ६५ ॥

ब्रह्मणश्चापि विष्णोश्च पदं स्यात्पशुभूमिका ।
ऐश्वरं चापि रौद्रं च पतिभूमिरिदं द्वयम् ॥ ६६ ॥

[सदाशिवादितत्त्वानि तेषामधिकारः मुक्तिलाभश्च]

अस्मदीश्वरतत्त्वात्स्यात्परं तत्त्वं सदाशिवम् ।
ततः परं शक्तितत्त्वं शिवतत्त्वमतः परम् ॥ ६७ ॥

अस्मिंश्च तत्त्वत्रितये भिन्नानि परमेशितुः ।
न विद्यन्ते कर्तृभूतान्यस्मिन्नात्मान्तराणि च ॥ ६८ ॥

लयभोगाधिकारेषु श्रद्धधानाः पदेषु च ।
दीक्षया दीक्षिता मन्त्रास्साधकाः परमेशितुः ॥ ६९ ॥

प्रसादतस्तानि तानि भुवनान्यधिगम्यते ।
महासंसारपर्यन्तं वैराग्यान्तमथापि वा ॥ ७० ॥

स्थित्वा विद्येशवन्मुक्ताः शिवात्मानो भवन्ति हि ।

[आकाशादिवर्णानां आगमानां च सङ्ख्या तेषां वैखरीरूपेण विद्यतत्त्वाधिवासश्च]

अकारादिक्षकारान्तावर्णाः पञ्चाशदेव हि ॥ ७१ ॥

अष्टाविंशतिसङ्ख्याकाः कामिकाद्याश्च संहिताः ।
वैखरीरूपमापन्ना विद्यातत्त्वे व्यवस्थिताः ॥ ७२ ॥

[प्रणवस्थानम्]

प्रणवश्चैश्वरे तत्त्वे वसेत्सादाख्यवस्तुनि ।

[बिन्दुनादयोः स्थानम्]

बिन्दुश्च सकलस्तद्वत् नादश्च सकलो वदेत् (वसेत् ?) [1] ॥ ७३ ॥

1. सदाशिवतत्त्वे इति शेषः ।

[नादात्मकपुर्यष्टकस्य शक्तितत्त्वावस्थानम्]

शक्तितत्त्वेऽ(ति?)भिसूक्ष्माभिधेयबुद्धेस्तु कारणम् ।
प्रत्यात्मं च पृथग्भूत्वा सूक्ष्मं नादात्मकं भवेत् ॥ ७४ ॥

पुर्यष्टकं च[1]

[बिन्दुशिवतत्त्वयोः कार्यकारणभावेनाभेदः]

बिन्दुश्च नियतं तत्र[2] तिष्ठति ।
शिवतत्त्वस्य बिन्दोश्च न भेदव्यपदेशनम् ॥ ७५ ॥

[शिवस्य सदाशिवशक्तितत्त्वावस्थितभेदेन नामान्तराणि]

अधितिष्ठन् स तु सदाशिवशक्तिशिवाभिधम् ।
तत्त्वत्रयमवाप्नोति नामान्येतानि वै शिवः ॥ ७६ ॥

तत्राद्यः सकलो ज्ञेयः ततस्सकलनिष्कलः ।
निष्कलश्च ततोऽव्यक्तो व्यक्ताव्यक्तस्ततः परम् ॥ ७७ ॥

अव्यक्तश्च महेशश्च सदाशिवशिवाविति ।

[बिन्दुस्वरूपं तस्य नित्यं शिवाधिष्ठेयता मायेयातिरिक्तोपादानकारणता च]

एतेष्वपि च षट्त्रिंशत्तत्त्वेषु व्यापको ध्रुवः ॥ ७८ ॥

अमूर्तः परमेशस्य नित्याधिष्ठेयतां गतः ।
शब्दार्थरूपो नादादिद्वारात्मज्ञानकारणम् ॥ ७९ ॥

अमोहकश्च भवति बिन्दुः स च जडात्मकः ।
मायेयव्यतिरिक्तानां स चोपादानकारणम् ॥ ८० ॥

---

1. शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
मनोबुद्धिरहङ्कारः पुर्यष्टकमुदीरितम् ॥ इति तत्त्वप्रकाशे पुर्यष्टकमुक्तम् ।

2. शिवतत्त्वे इत्यर्थः.

[षट्त्रिंशत्तत्त्वानामध्वाभिधानम्]

पृथिवीतत्त्वमारभ्य शिवतत्त्वावधीनि च ।
तानि तत्त्वानि षट्त्रिंशत्तत्त्वाध्वेत्यभिधीयते ॥ ८१ ॥

[भुवनाध्वपदव्याप्तिः]

अधः कालाग्निभुवनमारभ्य शिवविष्टपम् ।
द्विशतं भुवनानि स्युः पञ्चत्रिंशत्समन्वितम् ॥ ८२ ॥

भुवनाध्वपदेनेदं सर्वमेवाभिधीयते ।

[वर्णाध्वविवरणम्]

अकारादिक्षकारान्तवर्णा वर्णाध्वनामकाः ॥ ८३ ॥

[पदाध्वविवृतिः]

व्योमव्यापीत्यादिकस्तु सैकाशीतिः पदाध्वकाः ।

[मन्त्राध्वस्वरूपम्]

मूलब्रह्माङ्गरूपेण मन्त्राध्वैकादशात्मकः ॥ ८४ ॥

[कलाध्वपदार्थः]

निवृत्तिप्रमुखाः पञ्च कलाध्वेति समीरिताः ।

[भुवनादिकलान्तमर्थतत्त्वम्]

एतेषु च कलातत्त्वभुवनाख्यास्त्रयस्तु ते ॥ ८५ ॥

[1] अध्वानोध्व ? (र्थ)स्वरूपाः स्युः

[शब्दाध्वानः]

अथाध्वानः ततः परे ।
मन्त्रवर्णपदात्मानः त्रयः शब्दस्वरूपकाः ॥ ८६ ॥

1. अध्वानोऽध्वस्वरूपाः–मु. ग.

[भुवनाद्यध्वानां पूर्वपूर्वाध्वाश्रितत्वम्]

तत्त्वाध्वानमुपाश्रित्य भुवनाध्वावतिष्ठते ।
कलाध्वानं तु तत्त्वाध्वा भुवनाध्वा तु तं श्रितः ॥ ८७ ॥

त्रयोऽध्वानो वर्णपदमन्त्रात्मानो भवन्ति ये ।
ते वर्तन्ते भुवनजशरीराणां व्यपेक्षया ॥ ८८ ॥

[शुद्धविद्यायाः षडध्वकारणत्वम्]

षण्णामप्यध्वनामेषां परमं कारणं तु यत् ।
उच्यते शुद्धविद्येति ब्रह्मकुण्डलिनीति च ॥ ८९ ॥

[षडध्वानां संसारता जीवस्वरूपं च]

एतेऽपि च षडध्वानः संसारस्सकलात्मनाम् ।
षडध्वव्यतिरिक्ताश्च व्यापकाश्चेतना ध्रुवाः ॥ ९० ॥

प्रतिदेहं विभिन्नाश्च मलिनाः कर्मकारिणः ।
किञ्चिज्ज्ञः सेश्वरा जीवाः स्वकर्मफलभागिनः ॥ ९१ ॥

[पाशभेदेन जीवात्मनां नामभेदः]

सकलाकलविज्ञाना कलाश्च प्रलया कलाः ।
इति संज्ञां लभन्ते ते पाशभेदवशेन तु ॥ ९२॥

[पाशानां पञ्चविधत्वम्]

सर्वेषामात्मनां पाशाः पञ्चधा परिकीर्तिताः ।

[मायेयपाशः]

कलादिकपृथिव्यन्तभुवनादिस्वरूपवान् ॥ ९३ ॥

बन्धो मायेयसंज्ञस्तु विद्वद्भिः परिकीर्तितः ।

[कार्मपाशः तत्फलं च]

ज्योतिष्टोमब्रह्महत्याद्युत्पन्नोऽपूर्वसंज्ञकः ॥ ९४ ॥

संस्कारः कर्मशब्देन बन्धोऽन्यः परिकीर्त्यते ।
पुर्यष्टकान्तरगतं बुद्धितत्त्वमुपाश्रितः ॥ ९५ ॥

सुखदुःखविमोहादिफलयुक्तश्च जायते ।

[मलपाशः तत्स्वरूपं च]

बन्धो मलाभिधानस्तु स्वरूपाण्यात्मनां पृथक् ॥ ९६ ॥

ज्ञानक्रियां च सततं समावृत्य व्यवस्थितः ।
नित्यश्च व्यापकश्चैव भवेदपि जडात्मकः ॥ ९७ ॥

[बैन्दवपाशः]

विद्याविद्येश्वरादीनां शरीराणां च कारणम् ।
सूक्ष्मादिवैखर्यन्तस्य कारणं बैन्दवाभिधः ॥ ९८ ॥

[पाशचतुष्टयस्येश्वरीयरोधशक्तिमूलकत्वं, तस्याएव पाशादिशब्दाभिधेयता च]

मायेयमाणवं कार्मं बैन्दवं च चतुष्टयम् ।
पाशानां कारणीभूता तेषु बन्धेषु मा(या) पुनः ॥ ९९ ॥

सा शक्तिरैश्वरी रोधः पाशश्चेति निगद्यते ।

[तत्तदध्ववर्तिनां पाशभेदाः]

शुद्धाध्ववर्तिनां बिन्दुरोधौ पाशावुभौ मतौ ॥ १०० ॥

मिश्राध्ववर्तिनामुक्तौ द्वौ द्वौ कार्माणवाभिधौ ।
एवमेतद्धि बद्धानां चतुष्टयमुदाहृतम् ॥ १०१ ॥

मायेयसहितास्ते च पश्चाशुद्धाध्ववर्तिनाम् ।

[शुद्धाध्ववासिनां केवलं सुखानुभवः, शुद्धाध्वपदप्रवृत्तिनिमित्तं च]

त्रिष्वध्ववासिष्वेतेषु विशुद्धाध्वनिवासिनाम् ॥ १०२ ॥

मुक्तानामिव दुःखेनास्पृष्टा सुखपरम्परा ।
न सन्ति लेशतस्तत्र दुःखमोहादयोऽपि च ॥ १०३ ॥

अत एव हि शुद्धाध्वेत्यसौ समभिधीयते ।

[मिश्राध्ववासिनां सुखानुभवः]

मिश्राध्ववासिलोकानां सर्वाह?(ग)त्वे च सत्यपि ॥ १०४ ॥

सुखं दुःखं च मोहश्च मिश्रमेव प्रवर्तते ।

[अशुद्धाध्ववासिनामनुभवः]

अशुध्यध्वस्थितानां तु किञ्चिदृज्ञत्वाल्पकर्तृके ॥ १०५ ॥

सुखं दुःखं च मोहश्चेन्यमी तत्रैव सन्ति हि ।
अत एव स्वयं तज्ज्ञैरशुद्धाध्वेति [1]नी(गी)यते ॥ १०६ ॥

[आगन्तुकौ पाशौ]

अत्र बैन्दवमायेयपाशावागन्तुकावुभौ ।

[अनादिपाशः तन्निवर्तनोपायश्च]

अनादिराणवः पाशः स्वपाकान्ते महेशितुः ॥ १०७ ॥

प्रसादप्राप्त्या शैवदीक्षयैव निवर्तते ।

[कार्मपाशस्य निवारणोपायः]

कार्मस्तु पातोश्चिदृज्ञानयोगसन्यसनैश्च वा ॥ १०८ ॥

भोगेन तदभावे वा क्षीणभावं समश्नुते ।

[शैवीयपश्वादिपदार्थनिरूपणोपसंहारः]

पशुः पाशः पतिश्चेति त्रयस्त्वेवं प्रकीर्तिताः ॥ १०९ ॥

---

1. मीयते–ग.

एवं तत्त्वप्रपञ्चस्तु शैवे सम्यक् प्रदर्शितः ।

[शिवादिपृथिव्यन्तसृष्टिक्रमः ब्रह्माण्डसृष्टिश्च]

शिवप्रभृतिपृथिव्यन्तसृष्टिक्रम उदीर्यते ॥ ११० ॥

शिवतत्त्वाच्छक्तितत्त्वं शक्तितत्त्वात्सदाशिवः ।
सदाशिवादीश्वरश्च शुद्धविद्या तथेश्वरात् ॥ १११ ॥

माया च शुद्धविद्याख्यात्कलामायाख्यतत्त्वतः ।
कालतत्त्वं कलातत्त्वान्नियतिः कालतत्त्वतः ॥ ११२ ॥

विद्यातत्त्वं नियत्याख्याद्रागो विद्याख्यतत्त्वतः ।
रागतत्त्वाच्च पुरुषः पुरुषात्प्रकृतिस्ततः ॥ ११३ ॥

प्रकृतेश्च गुणस्तस्माद्बुद्धिर्बुद्धेरहङ्कृतिः ।
अहङ्कारश्च चित्ताख्यं चित्ताज्ज्ञानेन्द्रियाणि तु ॥ ११४ ॥

तेभ्यः कर्मेन्द्रियाणि स्युस्तेभ्यस्तन्मात्रपञ्चकम् ।
तन्मात्रेभ्यश्च भूतानि क्रमेणैव प्रजज्ञिरे ॥ ११५ ॥

पञ्चीकृतैस्तु तैर्भूतैः ब्रह्माण्डं समजायत ।

[ब्रह्माण्डगोलकस्य मानम्]

ज्ञानकोटिप्रविस्तीर्णः स च ब्रह्माण्डगोलकः ॥ ११६ ॥

कपालमर्बुदस्थौल्यं ब्रह्मणोऽण्डस्य योजनैः ।

[जलादिशक्त्यन्ततत्वमानभेदः शिवे मानराहित्यं च]

जलाद्यव्यक्ततत्त्वान्तं दशवृद्धिर्यथोत्तरम् ॥ ११७ ॥

अव्यक्ताद्रागतत्त्वं तु शतधा व्याप्यसंस्थितम् ।
रागतत्त्वाच विद्याख्यप्रशुद्धपशुमोचनम् ॥ ११८ ॥

सहस्रं वृद्धिविख्यातं शिवेन शिवशासने ।
ततः कालनियत्याख्यं संपुटं व्याप्यलक्षधा ॥ ११९ ॥

कालतत्त्वकला ज्ञेया लक्षायुतपरिच्छदा ।
तदूर्ध्वे तु भवेन्मायाकोटिं व्याप्य स्थिता[1] द्विधा ॥ १२० ॥

ततो विद्याच्च या शुद्धा हरिकोट्यायुता मता ।
ततश्चेश्वरसंज्ञं तच्छतकोटिगुणं भवेत् ॥ १२१ ॥

सहस्रकोटिः या वृद्धिः तत्त्वे सादाशिवे मता ।
शक्तिः स्यादर्बुदगुणः शिवे मानं न विद्यते ॥ १२२ ॥

[प्रलयावश्यकता]

देहिनां कर्मजा[2]तानि भोक्तुं सर्वासु योनिषु ।
भ्रमतां कर्मविश्रान्त्यै शिवेन प्रलयः कृतः ॥ १२३ ॥

[प्रतिलोमसृष्टिक्रमः]

शिवाद्विश्वं ततः सृष्टिः लयस्तत्प्रतिलोमतः ।
तन्मात्रेषु च भूतानि तन्मात्राणीन्द्रियेषु च ॥ १२४ ॥

इन्द्रियाणि लयं यान्ति दशान्तःकरणे तथा ।
गुणे तदन्तःकरणं स गुणः प्रकृतावपि ॥ १२५ ॥

रागादिपञ्चके सा च मायायां तच्च पञ्चकम् ।
विशुद्धाध्वनि सा माया बिन्दौ सोऽध्वा च [3]लीयते ॥ १२६ ॥

पुनः प्रवर्तते विश्वं जगदारभ्य बिन्दुतः ।
भगवन्निह पूर्वोक्त तत्त्वराशेरशेषतः ॥ १२७ ॥

---

1. ध्यथा–ग.
2. ला–मु.
3. धीयते–ग.

शिवतत्त्वं प्राप्यभूमिरेकमेवेति कीर्तितम् ।

[शिवतत्त्वस्य प्राप्यदेशप्रश्नः तदुत्तरोक्तिप्रतिज्ञा च]

तादृशाः शिवतत्त्वस्य प्राप्य भूवर्तते न वा ॥ १२८ ॥

निरूप्यमेतद्विज्ञानवेद्यजातं सविस्तरम् ।
दुर्विज्ञेयं च देवानां पृच्छ्यमानं मयाऽस्ति यत् ॥ १२९ ॥

तत्करोषि विशेषेण करामलकसन्निभम् ।
सन्देहजालतिमिरं सन्देहारातिसन्निभ ! ॥ १३० ॥

श्रीमद्वागमृतासेकश्चित्तं सप्रमदाङ्कुरम् ।
भो पुत्र ! यस्तव प्रश्नो योगिनामपि दुष्करः ॥ १३१ ॥

तस्योत्तरं वयं ब्रूमः समाहितमनाः शृणु ।

[निगमागमोक्तरीत्या शिवस्वरूपकथनं तस्यैव वेद्यता च]

शिवस्वरूपमाख्यातुं चतुरास्योऽपि न क्षमः ॥ १३२ ॥

तत्स्वरूपं तु निगमागमोक्तं वर्णयामहे ।
यत्पृष्टं शिवतत्त्वं तत् परविद्यादि नामभाक् ॥ १३३ ॥

परविद्या च कुटिलाकुण्डली शब्दतत्त्वकम् ।
[1] शुद्धब्रह्मपरो नादो बीजं चैव षडध्वनाम् ॥ १३४ ॥

शुद्धमाया सुमाया चानाहतं सुमनास्तथा ।
वागीश्वरी परोबिन्दुः कलामालिनिका तथा ॥ १३५ ॥

योगपीठं मन्त्रपीठं बिन्दुपीठं तृतीयकम् ।
विद्याशक्तिः क्रियाशक्तिः शक्तिश्चान्यापरिग्रहा ॥ १३६ ॥

ब्रह्म चैव महालिङ्गमिति पर्यायनामभिः ।
शिवतत्त्वस्वरूपं तु सर्वत्र प्रतिपाद्यते ॥ १३७ ॥

---

1. शब्द-ग.

तदेव च महालिङ्गं पराचीनप्रवृत्तिमत् ।
निष्कलाख्यं तु लिङ्गं स्यात्पूर्वोक्तव्युत्क्रमेण तु ॥ १३८ ॥

तदेव निष्कलं लिङ्गं शून्यलिङ्गाभिधं भवेत् ।
तदेव शून्यलिङ्गं तु स्यान्निरञ्जनजङ्गमम् ॥ १३९ ॥

हृत्पद्मकर्णिकामध्ये तन्निरञ्जनजङ्गमम् ।
प्रकाशयन्निहानादिभक्त इत्यभिधीयते ॥ १४० ॥

नित्यमुक्तं परं ब्रह्म सच्चिदानन्दरूपकम् ।
निष्कर्मकं च निर्दोषं निर्मायावरणं तथा ॥ १४१ ॥

निराश्रयं निरूपमं निस्सङ्गं नित्यनिर्मलम् ।
निर्गुणं चैव निर्द्वन्द्वं निर्लेपं चान्तवर्जितम् ॥ १४२ ॥

परमात्मेत्यादिशब्दैः [1] तदेव प्रतिपाद्यते ।
शैवशास्त्रोक्तरीत्यैवं पदार्थाः प्रतिपादिताः ॥ १४३ ॥

शास्त्रान्तरेषु विबुधाः पदार्थान् ब्रुवतेऽन्यथा ।
तस्माच्छिवाद्द्वयमन्यन्नास्ति लोकेषु किञ्चन ॥ १४४ ॥

इति शिवतत्त्वरत्नाकरे नवमकल्लोले शैवतत्त्वप्रतिपादनं नाम
तृतीयस्तरङ्गः

—o—

1. स एव-ग.

## नवमकल्लोले चतुर्थस्तरङ्गः

—o—

[कुमारस्य, मोक्षमार्गप्रदर्शकदर्शनादिप्रश्नः महीपालस्य तदुत्तरकथन प्रतिज्ञा च]

स्वामिन्! शास्त्रान्तराण्यत्र सन्तीति प्रतिपादितम् ।
नानाभेदं भवेद्यत्र पदार्थप्रतिपादनम् ॥ १ ॥

कियन्ति तानि शास्त्राणि निर्मितान्यत्र तानि कैः ।
किं तत्रात्मस्वरूपं वा पदार्थस्थितयोऽपि वा ॥ २ ॥

मुक्तेर्वापि क्रमस्तेषु कीदृशस्तद्वदस्व मे ।
एतद्विचारणे भूयो वर्ततेऽभ्यधिका स्पृहा ॥ ३ ॥

गूढान्प्रकाशयस्यर्थान् भास्वानिव विशेषतः ।
न तवाविदितं किञ्चिदीश्वरस्येव विद्यते ॥ ४ ॥

जिज्ञासितं ममाख्याहि प्रख्यातमहिमोन्नते! ।
कुमार! यस्तव प्रश्नः कुमारस्येव सूक्ष्मगः ॥ ५ ॥

तत्रोत्तरं वयं ब्रूमः क्रमादवहितः शृणु ।

[षड्दैवतदर्शनानि]

सौरं वैनायकं ब्राह्मं शाक्तेयं शैववैष्णवे ॥ ६ ॥

एतानि दर्शनान्याहुः षड्दैवतसमाश्रयात् ।

[षट् समयाः]

शैवं पाशुपतं कालामुखं कापालिकं तथा ॥ ७ ॥

बौद्धमार्हतकं [1] चैव समयाष्षडुदीरिताः ।

[शैवप्रभेदाः]

लकुलीशोदितं शैवं श्रीकण्ठोदितमित्यपि ॥ ८ ॥

सामान्यात्समयश्शैवो द्विधैव परिपठ्यते ।
तत्र पाशुपतं कालवक्त्रं महाव्रतं त्विति ॥ ९ ॥

लकुलीशोदितं त्रेधा दर्शनं भिद्यते पृथक् ।
[[2] वामं च दक्षिणं कालं शाम्भवं यामलं तथा ॥ १० ॥

सिद्धान्त इति षोढा स्याच्छ्रीकण्ठसमयः पृथक् ।]

[वैष्णवदर्शनप्रभेदाः]

वैखानसं पाञ्चरात्रं तथा भागवताभिधम् ॥ ११ ॥

वैष्णवं दर्शनं त्रेधा तत्तन्त्रज्ञैरुदीरितम् ।

[अवैदिकदर्शनानि]

सांख्यं निरीश्वरं चैव जैनं लोकायतं मतम् ॥ १२ ॥

[कलाश्रयाः विद्याः]

सामुद्रं वास्तुरत्नादिशास्त्रं विद्याः कलाश्रयाः ।

[लौकिकविद्याः]

वणिग्गोरक्षकृष्यादिशास्त्रं लौकिकमिष्यते ॥ १३ ॥

[वैदिकदर्शनानि]

शब्दो वैशेषिको न्यायो मीमांसा धर्मगोचरा ।
सांख्यो योगश्च वेदान्त इति वैदिकमुच्यते ॥ १४ ॥

---

1. चेति–मु.
2. अयं धनुरङ्कितो भागः मुद्रितकोशे नास्ति ।

[षड्दार्शनिकाः]

अक्षपादः कणादश्च कपिलो जैमिनिस्तथा ।
व्यासः पतञ्जलिश्चेति वैदिकाः शास्त्रकारकाः ॥ १५ ॥

[लौकिकवैदिकभेदेन पञ्चशास्त्राणि तेषां लक्षणं च]

सङ्ग्रहात्पञ्चशास्त्राणि लौकिकं वैदिकं तथा ।
आध्यात्मिकातिमार्गे द्वे मान्त्रिकं चेति नामतः ॥ १६ ॥

[लौकिकशास्त्रम्]

यद्दृष्टफलकं शास्त्रं तदेव स्यात्तु लौकिकम् ।

[वैदिकशास्त्रम्]

शास्त्रं वेदैकगम्यानां बोधकं वैदिकं स्मृतम् ॥ १७ ॥

[अध्यात्मिकशास्त्रम्]

तस्मिंश्च प्रतिपाद्यानामर्थानां निर्णयाय ये ।
मुनिप्रणीते शास्त्रे द्वे न्यायवैशेषिकाभिधे ॥ १८ ॥

सांख्यं पातञ्जलं चैव वेदान्तं चेति शास्त्रकम् ।
उद्दिश्योपनिषद्भागं प्रणीतं यन्मुनीश्वरैः ॥ १९ ॥

आत्मज्ञानोपयुक्तं तदाध्यात्मिकमिदं त्रयम् ।

[अतिमार्गशास्त्रम्]

रुद्रप्रणीतं यच्छास्त्रमतिमार्गं तदीरितम् ॥ २० ॥

शिवप्रणीतं सिद्धार्थं शास्त्रमात्रं प्रकीर्तितम् ।

[पूर्वमीमांसादर्शनकर्ता तत्स्वरूपं फलं च]

मीमांसायाः प्रणेता तु भगवान् जैमिनि[1]र्मुनिः ॥ २१ ॥

---

1. मतः—मु.

तस्मिन् शास्त्रे तु विषयः प्रपञ्चस्यास्य नित्यता ।
श्रुतेरपौरुषेयत्वमिष्टापूर्ताद्यनुष्ठितिः ॥ २२ ॥

कर्मानुष्ठानमे[1]वैकमनुष्ठातुः फलप्रदम् ।
भौतिकेभ्यश्शरीरेभ्यः इन्द्रियेभ्यो विलक्षणाः ॥ २३ ॥

आत्मानो विभवा नैके न तेभ्योऽस्ति विलक्षणः ।
कश्चिदत्रेश्वरो नाम लोके कर्मफलप्रदः ॥ २४ ॥

अदृष्टमेव निखिलप्रपञ्चारम्भकं भवेत् ।

[तत्र षट्प्रमाणानि]

प्रत्यक्षमनुमानं च उपमानं तथागमः ॥ २५ ॥

अर्थापत्त्यनुपलब्धी चेत्येवं मानानि षट् जगुः ।

[मीमांसाशास्त्रप्रमेयः]

श्रुतिलिङ्गादिभिर्मानैः न्यायैरन्यैरनेकधा ॥ २६ ॥

मीमांसित्वाऽथ वेदार्थं धर्मं स्वोचितमाचरन् ।
तत्त्वविज्ञानयोग्यत्वमात्मनः प्रतिपद्यते ॥ २७ ॥

देही तादात्म्यविज्ञानाद्धर्माधर्ममयेऽखिले ।
संसारमूले संक्षीणे मुच्यते भवबन्धनात् ॥ २८ ॥

एवं पदार्था मीमांसाशास्त्रे दिङ्मात्रमीरिताः ।

[वैशेषिकदर्शनप्रमेयः]

शास्त्रे वैशेषिके तावत्प्रतिपाद्य[2]महं ब्रुवे ॥ २९ ॥

---

1. कैकं-ग.
2. मथ-मु.

[तत्र षट् भावपदार्थाः तेषां लक्षणं च]

द्रव्यं गुणः कर्म जातिर्विशेषस्समवायकः ।
इति भावाः पदार्थाष्षट् कणादेन प्रदर्शिताः ॥ ३० ॥

गुणानामाश्रयो द्रव्यं कारणं समवायि वा ।
स्पन्दत्वरहितास्सन्तो जातिमात्राश्रया गुणाः ॥ ३१ ॥

कुर्याद्विभागसंयोगौ यत्तत्कर्मसमुच्चितौ ।
नित्या भिन्नेष्वनुस्यूतधीहेतुर्जातिरुच्यते ॥ ३२ ॥

भेदकेषु प्रसिद्धेषु यत्रासत्सु विभिन्नधीः ।
द्रव्येषु तेषु नित्येषु विशेषा भेदधीकराः ॥ ३३ ॥

समवायस्तु नित्यः स्यात्संबन्धोऽयुतसिद्धयोः ।
अभावः सप्तमो[1]ह्यर्थो निषेधमतिगोचरः ॥ ३४ ॥

[नवद्रव्याणि तत्र पृथ्वीलक्षणादिकम्]

नवैव तत्र द्रव्याणि तत्र गन्धवती मही ।
जरायुजाण्डजोद्भिज्जस्वेदजं [2] स्यात्तदुद्भवम् ॥ ३५ ॥

शरीरं मिश्रकार्मोत्थं योनिजाऽयोनिजात्मकम् ।
केवलेनैव पापेन यातनार्थमयोनिजम् ॥ ३६ ॥

तीव्रानन्दसहस्तद्वत्स्वर्गिणां पुण्यमात्रतः ।
मृत्पाषाणस्थावरात्मा विषयो घ्राणमिन्द्रियम् ॥ ३७ ॥

---

1. ष्वर्थो–ग.
2. जास्युः–मु.

[अब्लक्षणम्]

सांसिद्धिकद्रवा आपो देहो वरुणलोकजः ।
नदीकरकवा[1]ध्याधिर्विषयो रसनेन्द्रियम् ॥ ३८ ॥

[तेजसो लक्षणम्]

उष्णं तेजोऽग्निसूर्यादिलोके देहसमुद्भवः ।
[2]स्वर्णादितारकान्तानि विषयश्चक्षुरिन्द्रियम् ॥ ३९ ॥

[वायोर्लक्षणम्]

अपाकस्पर्शवान् वायुः धृत्याद्यैरनुमीयते ।
देहस्तज्जो मरुल्लोके [3]वृक्षाद्या विषयाः स्मृताः ॥ ४० ॥

द्व्यणुकं परमाणुभ्यां [4]त्रिभिस्तैः त्र्यणुकं भवेत् ।
एवमन्त्यावयव्यन्तं पूर्वैरारभ्यते परम् ॥ ४१ ॥

[व्योमलक्षणम्]

व्योम शब्दाश्रयस्तत्स्याददृष्टाच्छ्रोत्रमिन्द्रियम् ।
अतीन्द्रियं च विभ्वेकं मूर्तानामवकाशदम् ॥ ४२ ॥

[कालदिशोर्लक्षणम्]

पूर्वापरत्वकृत्का[5]लो दिक् च दूरान्तिकत्वकृत् ।

[आत्मनः लक्षणम्]

आत्मा ज्ञानाश्रयो नाना सुखदुःखाद्यसङ्करात् ॥ ४३ ॥

---

1. ध्यादि-मु.
2. स्वर्गा-मु.
3. त्रिगक्षो विषयाः स्मृताः-ग.
4. निभि-मु.
5. मो-ग.

देहे भिन्नेऽप्यवस्थाभिः यत्राहमिति धीः स्फुटे ।
देहान्तरग्रहो यस्य सचात्मा कर्मबन्धनः ।। ४४ ।।

[मनसः लक्षणम्]

सुखादिविषयं ज्ञानमपरोक्षं यतो भवेत् ।
मनस्तु नित्यमणु च युगपद्धीष्वनुद्भवात् ।। ४५ ।।

अभावस्तेजसो ध्वान्तं न द्रव्यान्तरमिष्यते ।
कार्ष्ण्यमारोपितं तत्र स्मृतं शुक्लं विरोधतः ।। ४६ ।।

एवं नवैव द्रव्याणि प्रोक्तान्यथ गुणान् ब्रुवे ।

[चतुर्विंशतिगुणाः तेषां लक्षणं च]

गुणा रूपादयस्ते तु चतुर्विंशतिरीरिताः ।। ४७ ।।

तत्र रूपं रसो गन्धः स्पर्शश्चेति गुणाः क्रमात् ।
जातिमत्त्वेऽक्षिरसनघ्राणत्वक्छ्रोत्रगोचराः ।। ४८ ।।

पाकजाः पृथिवीनिष्ठा जलादिस्थास्त्वपाकजाः ।
कार्यं द्रव्यं हि भिन्दानां तेजोरूपरसादिकम् ।। ४९ ।।

नाशयेज्जनयेद्यातस्तत्पाकाः परमाणुषु ।
एकादिव्यवहाराणामसाधारणकारणम् ।। ५० ।।

संख्या द्वेधा श्रिता द्रव्यमपेक्षाबुद्धिजेति च ।
[1] आद्यैकत्वं [2] द्वित्रिमुख्यपरार्धान्ता परा मता ।। ५१ ।।

मानधीर्व्यवहाराणामसाधारणकारणम् ।
परिमाणं चतुर्धा तन्महत्तत्र द्विधा मतम् ।। ५२ ।।

---

1. आद्यैकत्वं ?—ग.
2. आद्या एकत्वं इति पदच्छेदः ।

मध्यं च परमं चेति दृश्यं मूर्तेषु खादिषु ।
कार्यं नित्यमणु द्वेधा तत्राद्यं द्व्यणुके स्थितम् ॥ ५३ ॥

पारिमाण्डल्यमित्येतदन्यत्तत्परमाणुषु ।
ह्रस्वं तद्व्यणुकेष्वेव महत्स्वेव च दीर्घता ॥ ५४ ॥

इदमस्मात्पृथगिति पृथक्त्वं व्यवहारकृत् ।
संयोगोऽप्राप्तयोः प्राप्तिः विभागस्तद्विनाशकः ॥ ५५ ॥

परापरत्वे कालोत्थे पुराणनवपिण्डगे ।
दिग्वै दूरान्तिकार्थस्था ह्यपेक्षा बुद्धिजन्मनि ॥ ५६ ॥

प्रथमे पातने हेतुर्गुरुत्वं स्यन्दने द्रवः ।
गुणः सङ्ग्रहकृत्स्नेहः शब्दः श्रोत्रैकगोचरः ॥ ५७ ॥

यज्जातीयस्समुत्पाद्यः तज्जातीयस्य कारणम् ।
स्वयं विजातिरद्विष्टः संस्कारः सगुणो भवेत् ॥ ५८ ॥

बुद्धिरर्थप्रकाशः स्याद्द्विविधा सा प्रमाऽप्रमा ।
प्रमा प्रत्यक्षमनुमा स्मृतिरार्षमिति स्थिता ॥ ५९ ॥

अप्रमा संशयभ्रान्तिः स्वप्नानध्यवसायिनी ।
अनुकूल[धियो]न्तराहेतुरनुकूलं सुखं स्वतः ॥ ६० ॥

प्रतिकूलं स्वतो दुःखमिच्छाशक्तिस्सुखादिषु ।
द्वेषः स्यादसहिष्णुत्वमुत्साहो यत्न इष्यते ॥ ६१ ॥

विहितात्कर्मणो धर्मो निषिद्धादप्यकर्मकः ।
क्रियाकालात्परे काले कारणं सुखदुःखयोः ॥ ६२ ॥

[पञ्चकर्माणि]

पञ्चधा कर्म तत्रोर्ध्वमधश्च द्रव्ययो[1]जकम् ।
उत्क्षेपण[2]मवक्षेपः तिर्यक् चोर्ध्वं प्रसारणम् ॥ ६३ ॥

द्रव्यास्ययोराभिमुख्यं परमाकुञ्चनं मतम् ।
नानादिग्देशसंबन्धकारणं गमनं विदुः ॥ ६४ ॥

प्रवेशो निर्गमः स्पन्दो [3]भ्रमणादिरनेकधा ।

[सामान्यम्]

जातिः पराऽपरा द्वेधा सत्तार्थत्रयगा परा ॥ ६५ ॥

द्रव्यत्वगोत्वभूत्वादेरपराऽल्पार्थवृत्तितः ।

[विशेषसमवायौ]

विशेषसमवायौ द्वौ पदार्थौ प्राङ्निरूपितौ ॥ ६६ ॥

[वैशेषिकमते मोक्षः तदुपायश्च]

विवेकेन पदार्थानां बुद्ध्वात्मानं यथार्थतः ।
योगस्थो दुःखविध्वंसमात्यन्तिकमुपाश्नुते ॥ ६७ ॥

एवं वैशेषिकमतं

[नैयायिकदर्शने प्रत्यक्षप्रमाणं तन्निरूपणं च]

नैयायिकमथोच्यते ।
प्रमाणं प्रमया व्याप्तं यथार्थनुभवः प्रमा ॥ ६८ ॥

---

1. जितम्–मु.
2. मधक्षेपः–मु.
3. भ्रमादि–ग.

तत्रेन्द्रियार्थसंबन्धप्रत्यक्षं मानमिष्यते ।
स्वरूपमात्रधीहेतुः निर्विकल्पं तदुच्यते ॥ ६९ ॥

नामजात्यादि युक्तार्थधीहेतुस्सविकल्पकम् ।
योगिनां च प्रकाशादिमापेक्षं तत्प्रकाशकम् ॥ ७० ॥

योगिनां योगजाद्धर्मात्सूक्ष्मातीतादिगोचरम् ।

[अनुमानप्रमाणं तत्परिकरश्च]

कारणं यत्परोक्षार्थप्रमितेर्व्याप्तिबोधतः ॥ ७१ ॥

अनुमानमिदं व्याप्तिः संबन्धो निरुपाधिकः ।
साधनाव्यापकत्वे यः साध्यस्य व्यापको भवेत् ॥ ७२ ॥

उपाधिस्स हि विज्ञेयो हेत्वाभासस्य कारणम् ।
दृष्टं सामान्यतोदृष्टमनुमानमिति द्विधा ॥ ७३ ॥

पूर्वं प्रत्यक्षयोगार्थं तदयोगार्थमुत्तरम् ।
अन्वयव्यतिरेक्येकमन्वयिव्यतिरेकि च ॥ ७४ ॥

[आगमप्रमाणं तन्निरूपणं च]

आगमो लौकिको वेदो वेदमूलश्च स त्रिधा ।
श्रुतातिदेशवाक्यस्य सादृश्यं क्वचिदीक्षितम् ॥ ७५ ॥

[उपमानप्रमाणं इतरेषामन्त्रान्तर्भावश्च]

शब्दसङ्केतधीहेतुरुपमानं परं तु यत् ।
अयमेवाविनाभावादर्थापत्तिश्च संभवः ॥ ७६ ॥

अभावधीः स्यादग्न्यादेरैतिह्यासत्वमागमः ।

[प्रमेयनिरूपणम्]

आत्मादिकं प्रमेयं तु तत्र द्वादशधोदितम् ॥ ७७ ॥

आत्माऽहंप्रत्ययग्राह्यस्संसारी कर्मबन्धनात् ।
तद्भोगायतनं देहस्साक्षाद्धीहेतुरिन्द्रियम् ॥ ७८ ॥

भूतानि सगुणान्यर्थो बुद्धेरर्थप्रकाशनम् ।
साक्षाद्धि यः सुखादीनां करणं मन इन्द्रियम् ॥ ७९ ॥

प्रवर्तनात्मका दोषा रागद्वेषमदादयः ।
प्रवृत्तिस्तु क्रिया श्रुत्या विहितप्रतिषिद्धयोः ॥ ८० ॥

देहाद्देहान्तरप्राप्तिः प्रेत्यभाव इहात्मनः ।
फलं तु कर्मणां साध्यं दुखं तु प्रातिकूल्यवत् ॥ ८१ ॥

दुःखात्यन्तसमुच्छेदो मोक्षस्तद्धेतुभिस्सदा ।
अनुमानैरिदं सर्वं बुद्धया श्रुत्यविरोधिभिः ॥ ८२ ॥

मोक्षमार्गान् परानेतैः बोधयेत्संशयच्छिदे ।
पक्षलिङ्गादि[1]निर्णीत्यै प्रत्यक्षादिचतुष्टयम् ॥ ८३ ॥

वेदितव्यं तु मोक्षाय मेयं द्वादशधोदितम् ।
[संशयलक्षणम्]
अनुमानप्रवृत्त्यङ्गं संशयाद्यथ कथ्यते ॥ ८४ ॥

तत्रानवधृतिज्ञानं संशयस्स त्रिधा मतः ।
साधर्म्याद्वाऽथ वैधर्म्याद्वादिविप्रतिपत्तितः ॥ ८५ ॥

प्रयोजनं यदुद्देश्यं दृष्टान्तस्सम्प्रतिस्थलम्[2] ।
[सिद्धान्तस्तद्विभागश्च]
मानैरभिमतैस्सिद्धः सिद्धान्तस्स चतुर्विधः ॥ ८६ ॥

---

1. निर्मित्यै–ग.
2. सम्प्रतिपन्नस्थलमित्यर्थः ।

स सर्वतन्त्रसिद्धान्तो यस्सर्वैरभ्युपेयते ।
स्वशास्त्रमात्रे यस्सिद्धः स ह्यभ्युपगमो मतः ॥ ८७ ॥

एकार्थसिद्धयो[1]र्वान्यः सिद्धेशद्वार एव सः ।
शास्त्रान्तरास्वीकृतो यः प्रतितन्त्रागतस्तु सः ॥ ८८ ॥

स्वस्वप्रतीतये यत्तु लिङ्गं तत्स्वार्थमुच्यते ।

[पञ्चावयववाक्यनिरूपणम्]

परार्थं परबोधाय तत्पञ्चावयवं मतम् ॥ ८९ ॥

प्रतिज्ञा[2]ख्या अवयवाः पञ्च व्याप्त्यादिबोधकाः ।
एतैरवयवैर्लिङ्गं पञ्चरूपं प्रतीयते ॥ ९० ॥

तद्रूपसाधने पक्षधर्मत्वादिकमुच्यते ।
पञ्चरूपोपपन्नेऽस्मिन् अनुमाने निरूपिते ॥ ९१ ॥

पञ्चावयववाक्येन जिज्ञासुस्साध्यसिद्धिभाक् ।
पक्षे साध्यान्वयं वा यः सपक्षे वा प्रयोजकः ॥ ९२ ॥

सङ्केतोऽस्मै प्रयोज्यः स्यात्तर्कोऽनिष्टप्रयोजकः ।
प्रामाणिकपरित्यागो निष्प्रमाणपरिग्रहः ॥ ९३ ॥

इत्यनिष्टं द्विधा प्रोक्तं यस्य तर्कप्रसञ्ज्ञकः ।
सहकार्यानुमानस्य न केवलमसौ मतः ॥ ९४ ॥

किं तु सर्वस्य मानस्य वारयत्येव दुःस्थितम् ।
तर्कोपकारणान्मानान्निर्णयोऽर्थावधारणम् ॥ ९५ ॥

---

1. र्था–ग.
2. स्व–मु., ख्या–ग.

वादिनः स्वस्य पक्षस्य प्रकटीकरणं तथा ।
यत्र निर्णयमात्रार्थादनुमानं प्रयुज्यते ॥ ९६ ॥

[जल्पलक्षणम्]

तर्केण च [1] पराक्षेपो वादोऽसौ वीतरागयोः ।
जयार्थं यत्र वादिभ्यां मानजातिच्छलादयः ॥ ९७ ॥

प्रयुज्यन्ते स जल्पः स्यात्पक्षयोः स्थापनेच्छया ।

[वितण्डावादलक्षणम्]

दूषणं कथ्यते यत्र केवलं प्रतिवादिना ॥ ९८ ॥

न स्थाप्यते स्वपक्षस्तु वितण्डा सा कथा मता ।

[हेत्वाभासलक्षणम्]

स्वयं व्यञ्जयितुं बुध्द्वा प्रोक्तं व्यञ्जयितुं परैः ॥ ९९ ॥

मिथः कथावसानाय हेत्वाभासा निरूपिताः ।
असिद्धः प्रथमस्तत्र ज्ञातः पक्षी भवेन्नयः ॥ १०० ॥

पक्षाभावे प्रयुक्तोऽयमाश्रयासिद्ध उच्यते ।
न स्वयं विद्यते यस्स स्वरूपासिद्ध ईरितः ॥ १०१ ॥

साध्येन योगस्सोपाधिर्यस्यासौ व्याप्तिसिद्धिमान् ।
परैरज्ञायमानोऽप्यावज्ञानासिद्ध उच्यते ॥ १०२ ॥

हेत्वाभासो विरुद्धस्तु साध्याभावैकगोचरः ।
साध्ये च तदभावे च यस्सोऽनैकान्तिकः स्मृतः ॥ १०३ ॥

---

1. पटा–ग.

साध्याच्च तदभावाच्च व्यावृत्तोऽपि स उच्यते ।
मानान्तरैरपहृते धर्मे तत्सिद्धये कृतः ॥ १०४ ॥

कालात्ययापदिष्टोऽसौ प्रत्यक्षादिविरोधतः ।
यस्य हेतुः परोक्तेन तद्विरुद्धार्थवृत्तिना ॥ १०५ ॥

वृद्धस्समबलेनैव भवेत्स प्रतिपक्षकः ।
साधकेन प्रयुक्तास्ते हेत्वाभासतयोदिताः ॥ १०६ ॥

छलजात्यादिसंज्ञास्स्युः प्रोक्ता दूषणवादिना ।
साधकेनानभिमतं कल्पयित्वैव दुष्यति ॥ १०७ ॥

येन तच्छलमुद्दिष्टमसिद्धं दोषसाधनम् ।
स्वाभो दूषणहेतोस्तु व्याप्तिर्यत्र न विद्यते ॥ १०८ ॥

तज्जात्युत्तरमित्युक्तमशक्तं दूष्यदूषणे ।
पराजयनिमित्तं तु निग्रहस्थानमुच्यते ॥ १०९ ॥

कथावसानं तेनैकनिर्णयो वा जयो मतः ।
प्रतिज्ञाहीनसन्न्यासाभेदहेत्वन्तरादिभिः ॥ ११० ॥

विक्षेपाप्रतिभाद्यैश्च रूपैस्तद्बहुधा स्थितम् ।
इति वेदैकवेद्यानां धर्माधर्मेश्वरात्मनाम् ॥ १११ ॥

विचारो यदधीनोऽसौ न्यायस्साङ्गो निरूपितः ।

**इति शिवतत्त्वरत्नाकरे नवमकल्लोले शास्त्रविभागमीमांसावैशेषिकन्याय-मतनिरूपणं नाम चतुर्थस्तरङ्गः**

—o—

शिवतत्त्वरत्नाकरः

## नवमकल्लोले पञ्चमस्तरङ्गः

—o—

[साङ्ख्यमतनिरूपणप्रतिज्ञा]

मीमांसान्यायकाणादशास्त्रीयार्थाः प्रदर्शिताः ।
साङ्ख्यशास्त्रे तु विषयः संप्रति प्रतिपाद्यते ॥ १ ॥

[साङ्ख्योपगतप्रमाणानि]

प्रमाणं त्रितयं चात्र प्रत्यक्षं [1] चानुमाऽऽगमः ।

[पुरुषतत्त्वम्]

पुरुषाः प्रथमं तत्त्वं चिन्मात्राः सङ्गवर्जिताः ॥ २ ॥

निर्विकारा अकर्तारः प्रधानोपाधिबन्धनाः ।

[प्रधानतत्त्वम्]

प्रधानं विषयस्साम्यं गुणानां प्रसवक्रियाः ॥ ३ ॥

[सत्त्वरजस्तमसां कार्याणि]

तमस्सत्वं रजस्ते स्युः मोहशर्मार्तिहेतवः ।
[2] आच्छादकं तमस्तत्र सत्वं चैव प्रकाशन(क)म् ॥ ४ ॥

रजश्चलं सङ्ग्रहकृत्पुमर्थास्ते मिथोऽन्विताः ।
कार्यस्य त्र्यात्मकस्यैवं यत्र सौक्ष्म्येण वर्तनम् ॥ ५ ॥

---

1. च समागमः–ग. मु.
2. आचारकं–ग. मु.

[प्रधानात् जगत्सृष्टिप्रतिज्ञा]

[1] तत्प्रधानं यतस्सर्वं जगदुत्पत्तुमर्हति ।

[महत्तत्त्वादितः देहान्ताध्यात्मिकसृष्टिः]

तस्माज्जातं महत्तत्त्वं सत्त्वाधिक्यात्ससत्वकम् ॥ ६ ॥

तस्मादजन्याहङ्कारो येनाहं कुरुते कृते ।
सत्त्वाधिकादहङ्कारादिन्द्रियाणि प्रजज्ञिरे ॥ ७ ॥

तन्मात्रास्तामसात्तत्त्वाद्राजसात्तत्प्रवृत्तयः ।
तन्मात्रेभ्यो मिथो योगादाकाशादीनि जज्ञिरे ॥ ८ ॥

एतैराध्यात्मिकी सृष्टिः भोगाय प्रतिपूरुषम् ।
क्रियते तत्प्रभूतेभ्यो नानादे[2]हाः स्युरात्मनाम् ॥ ९ ॥

[महत्तत्त्वात् बुध्यादिवृत्तयः तत्प्रभेदाश्च]

महत्तत्त्वं तु बुध्याख्यविकृतिं प्रतिपद्यते ।
ततः प्रभृतिमोक्षान्तं विपर्यासादि वृत्तिभिः ॥ १० ॥

तमो मोहमहामोहतामिस्राध्यात्मिकाः क्रमात् ।
विभ्रमोऽसाव[3]विद्याख्या पञ्चपर्वा प्रकीर्त्यते ॥ ११ ॥

[4] भ्रमस्त्वतस्मिंस्तद्बुद्धिरविद्येति च कथ्यते ।
तन्मात्रबुध्यहङ्कारमनोयोगात्तदष्टधा ॥ १२ ॥

---

1. तत्प्रहारं–मु.
2. हात्स्यु–मु.
3. निद्रा–ग.
4. तम–ग.

मोहोऽभिमानोऽस्मित्वं तदैश्वर्यविषयोऽष्टधा ।
सक्तीरागो महामोहास्तन्मात्रा भूतगोचराः ॥ १३ ॥

विषयैश्वर्यविध्वंसकारिषु द्वेषसंज्ञितः ।
ज्वलनात्मैव तामिस्रः सङ्ख्यया‌ऽष्टादशात्मकः ॥ १४ ॥

तेषां विनाशतो भीतिस्तावदेवान्ध्यमुच्यते ।
एवं द्विषष्टिभेदोऽसौ पञ्चपर्वा विपर्ययः ॥ १५ ॥

एकादशेन्द्रियैश्वर्यं नवतुष्टिर्विपादतः ।
अष्टाविंशतिधा [1] प्राहुरसक्तिं बुद्धिवृत्तिषु ॥ १६ ॥

मोक्षाशाहेतुतत्कालभाग्यभोगविरक्तिजाः ।
तुष्टयो नवबुद्धेस्स्युः वृत्तयश्शास्त्रदर्शनात् ॥ १७ ॥

[2] सर्जने रक्षणे नाशे भोगे च परहिंसने ।
दोषान् भावयतः पञ्च तुष्टयोऽत्र विरक्तिजाः ॥ १८ ॥

[3] ऊहाध्ययनमीमांसासुहृत्सत्त्व[4]विशुद्धयः ।
त्रयो दुःखविघाताश्च सिद्धयोऽष्टौ सुपुण्यजाः ॥ १९ ॥

अम्बा च सलिलाघा च भाग्या पारासुपारिका ।
सुनेत्रा सुकुमारीति तुष्टयोऽत्रोत्तमेति च ॥ २० ॥

तारा तारतरा सिद्धिः सुतारा रम्यकेति च ।
सदा प्रमुदिता मोदा मुद्रिता मोदमानिका ॥ २१ ॥

---

1. प्राहुस्सक्तिं–ग.
2. जर्जे–ग.
3. उषा–मु.
4. विशुद्ध–मु.

धर्मो ज्ञानं विरागित्वमैश्वर्यं तद्विपर्ययः ।
बुद्धे रूपाष्टकमिदं क्रमात्सात्विकतामसम् ॥ २२ ॥

[सांख्यमतरहस्यं तत्कर्ता च]

अत्राविवेकतो बन्धस्तद्विवेकाद्विमुच्यते ।
विवेकश्च प्रसङ्ख्यानात्तच्च सच्छास्त्रलाभतः ॥ २३ ॥

विवेकख्यातिलाभे तु प्रकृतिः कृतकृत्यताम् ।
प्राप्ता निवर्तते पुंसः कृतनृत्येव नर्तकी ॥ २४ ॥

स्वप्रकाशचिदेकात्मा निस्सङ्गः क्लेशवर्जितः ।
अविवेकविघातेन मुक्ता चैकावभासते[1] ॥ २५ ॥

प्रणेता चास्य शास्त्रस्य भगवान् कपिलो मुनिः ।

[योगदर्शनानुग्रहकारः तत्सङ्ग्राहकश्च]

आदौ हिरण्यगर्भेन योगं तं विस्तरोदितम् ॥ २६ ॥

अध्यायेनैव भगवानन्वगृह्णात्पतञ्जलिः ।

[योगशब्दार्थः, चित्तवृत्तयः तासां लक्षणं च]

चित्तवृत्तिनिरोधोऽत्र योगशब्देन कीर्तितः ॥ २७ ॥

चित्तस्य वृत्तयः पञ्च प्रमाणाद्यास्समासतः ।
प्रत्यक्षादिप्रमाणं स्यान्मिथ्याज्ञानं विपर्ययः ॥ २८ ॥

विकल्पो वस्तुना शून्यं शब्दोत्थं ज्ञानमिष्यते ।
निद्रा वृत्त्यन्तराभाव[2]हेत्वन्तरमुपाश्रिता ॥ २९ ॥

1. " मुक्तश्चैकोऽवभासते " इति युज्यते ।
2. हेतुं तव उपा–ग.

असंप्रमोषः स्मरणमनुभूतस्य वस्तुनः ।

[चित्तवृत्तिनिरोधकारणम्]

एतन्निरोधस्त्वभ्यासात्प्रणिधानात्तथेश्वरे ॥ ३० ॥

[ईश्वरस्वरूपम्]

क्लेशाद्यैरपरामृष्ट ईश्वरः परमः पुमान् ।
सार्वज्ञ्यकारणं तस्य स्वप्रकाशश्चिदात्मनः ॥ ३१ ॥

विशुद्धस्य नरेशस्य जगदर्थं प्रवर्तते ।

[चित्तपरिपाकः तत्कारणं च]

वैराग्याद्वृद्धदोषोत्थादभ्यासादेकतत्त्वगात् ॥ ३२ ॥

ईश्वरानुग्रहाच्च स्याच्चित्तं हि परिकर्मवित् ।

[समाधिलाभः तद्भेदाः समाधेर्मोक्षसाधनत्वं च]

दोषपाकयुते चित्ते समाधिर्योगसंज्ञितः ॥ ३३ ॥

सम्प्रज्ञातस्तदन्यात्मा द्वेधा स्थैर्यं व्रजेत्क्रमात् ।
[1] तत्राद्यः सवितर्काख्यो मूर्तिमध्येऽथगोचरः ॥ ३४ ॥

स एव सविचाराख्यो भूतसूक्ष्मावलम्बनः ।
आनन्दानुगताख्यः स्याद्बुद्धिस्तत्रैकसंश्रया ॥ ३५ ॥

स तु गृह्णन् गृहीतारमस्मिन्नेतान् गतो भवेत् ।
ततो गुणेषु वैराग्ये पुरुषः ख्यातितः परः ॥ ३६ ॥

---

1. अत्रायं मुद्रितकोशपाठः—

तत्राद्यः सवितर्काख्यो भूतसूक्ष्मावलम्बनः ।
आनन्दानुगताख्यः स्याद्बुद्धिस्तत्रैकसंश्रया ॥

असंप्रज्ञातसंज्ञः स्यात्समाधिस्त्वेकगोचरः ।
स संस्कारः सबीजः स्यान्निर्बीजः तन्निरोधतः ॥ ३७ ॥

विवेकख्यातिजननान्मोक्षमार्गस्स उच्यते ।
समाधिमेनं निर्बीजं यमाद्यष्टाङ्गसम्पदा ॥ ३८ ॥

साधयन् [1] सिद्ध्यसक्तः कैवल्याय प्रकल्पते ।

[योगसिद्धयः]

[2] इत्थं संयतचित्तस्य सम्यग्वस्तुषु तत्वधीः ॥ ३९ ॥

जातिः स्मृतिश्च सार्वज्ञ्यं भूमिर्मधुमती हि सा ।
भूतेषु संयमात्तेषां जयस्तत्राणिमादयः ॥ ४० ॥

मधुप्रदीपाभूमिः स्यादिन्द्रियेषु तु तज्जयात् ।
तन्मात्रासु मनोबुद्धिमुखेषु क्रमतोऽन्वधैः ॥ ४१ ॥

पैशाचपूर्वमैश्वर्यमाब्रह्म याति संयमी ।
भूमिमेनां विशोकाख्यां प्राप्तो देवैश्च पूज्यते ॥ ४२ ॥

चक्रशूलादियुक्तासु परमेश्वरमूर्तिषु ।
संयमा[3]त्तत्समौकस्त्वसारूप्यैश्वर्यभाग्भवेत् ॥ ४३ ॥

[परवैराग्यान्निर्बीजसमाधिना कैवल्यं, योगशास्त्रोपसंहारश्च]

योगी तत्परवैराग्याद्योगं निर्बीजमाश्रयेत् ।
विवेकख्यातिलाभेन कैवल्यं पदमश्नुते ॥ ४४ ॥

---

1. स्फिङ्ग्यसक्तश्च इति-(मु) ।
2. नित्य-ग.
3. त्सलोकत्व-मु.

एवं पातञ्जले शास्त्रे पदार्थक्रम ईरितः ।

[चतुर्विधवेदान्तमतनिरूपणं तेषां नामानि च]

वेदान्तिनस्तु शास्त्रज्ञैश्चतुर्धा संप्रकीर्तिताः ॥ ४५ ॥

मायावादपराः केचिद्भास्करीयास्त्[1]थेतरे ।
शब्दब्रह्म वदन्त्यन्ये क्रीडाब्रह्म तथापरे ॥ ४६ ॥

[मायावादिमतनिरूपणम्]

तत्रादौ वर्ण्यतेऽस्माभिः मायावादजुषां मतम् ।
निष्प्रपञ्चं परं ब्रह्म सदखण्डसुखात्मकम् ॥ ४७ ॥

अद्वितीयं चिदानन्दं निस्सङ्गं ब्रह्मनिर्गुणम् ।
यज्ञदानादिभिः पूतो युक्तः शमदमादिभिः ॥ ४८ ॥

मननध्यानयुक्तेन श्रवणेनैक्यमश्नुते ।
श्रवणं श्रुतितात्पर्यनिर्णयार्थं विचारणाम् ॥ ४९ ॥

श्रौतार्थासंभवं क्षेप्तुं मननं चिन्तनं मुहुः ।
विक्षेपक्षतये तस्मिन्नैकाग्र्यं ध्यानमिष्यते ॥ ५० ॥

ब्रह्मात्मैक्यापरोक्षं स्याद्वृत्त्या वाक्योत्थया तदा ।

[तत्त्वमस्यादिवाक्यार्थविवरणम्]

तत्पदेन समस्तात्मा त्व पदेनाहमा[2]श्रयः ॥ ५१ ॥

उच्यते न तयोरैक्यं युक्तं स्वर्णायसोरिव ।
ततस्त्यक्त्वा विरुद्धांशौ लक्षिते शोधितात्मना ॥ ५२ ॥

1. थापरे-मु.
2. श्रितः-मु.

तत्रेदन्ते विरोधिन्यौ सोयमित्यादिके यथा ।
जीवस्य चेश्वरस्यापि भेदं संसिद्धमीदृशम् ॥ ५३ ॥

छेत्तुमैक्यपरिच्छित्तं करोत्यसिपदं स्फुटम् ।
ब्रह्मायमात्मा तद्योहमित्यादीन्यपराणि च ॥ ५४ ॥

न्यायेनानेन वाक्यानि व्याख्येयानीति मीयताम् ।

[जीवस्वरूपादिविवरणम्]

चैतन्यप्रतिबिम्बत्वाज्जीवश्चेतन एव सः ॥ ५५ ॥

जीवस्तु प्रतिबिम्बोऽसौ स्वप्रकाशोऽप्यविद्यया ।
न शक्तो भासनेऽर्थानामरणिस्थ इवानलः ॥ ५६ ॥

अधिष्ठान(ज्ञान)सुरादेशसंस्काराख्यत्रिकारणः ।
सत्यमिथ्यार्थसम्भे[1]दाभासोऽध्यास [2] इतीरितः ॥ ५७ ॥

यतः सोऽयं स संस्कारो भवेद्यत्रैव लीयते ।
सास्त्यनादिरविद्यैषा तत्त्वव्यामोहदायिनी ॥ ५८ ॥

मूढोऽहमित्यनुभवात्स्वप्रकाशचिदाकृतेः ।
शतैर्मोक्षोपदेशाच्चमूलाविद्याऽभ्युपेयते ॥ ५९ ॥

मामन्यं च न जानेऽहमिति स्वान्यधियामपि ।
अविद्या विद्यमाना हि भावरूपैव गम्यते ॥ ६० ॥

जीवोन्तःकरणे तत्र प्रतिबिम्बत्वमागतः ।
अनीत(अनेक)धर्मबुद्धिस्थैः कामाद्यैरपि दूषितः ॥ ६१ ॥

---

1. दाख्सो–मु.
2. प्रकीर्तितः–मु.

[प्रतिबिम्बस्य बिम्बाभेदनिरूपणम्]

ममैवमुखमित्येवमादर्शस्थे प्रतीतितः ।
प्रतिबिम्बस्य भेदस्तु बिम्बात्तत्त्वेन नेष्यते ॥ ६२ ॥

बिम्बत्वाद्ब्रह्मणादैवमाविलत्वमविद्यया ।
नहि स्याल्लोहमालिन्यं बिम्बस्याभिभवक्षमम् ॥ ६३ ॥

निरध्यासस्ततः शुद्धो जीवस्साक्ष्येवशिष्यते ।
भेदमात्रमिवाध्यस्तं ब्रह्मात्मैक्यावृतेः पुरा ॥ ६४ ॥

तद्दर्शनार्थश्रवणात्तदैव च निवर्तते ।

[ब्रह्मदर्शनोपायः]

एतद्दर्शनमुद्दिश्य वेदान्तोक्त्यैकगोचरः ॥ ६५ ॥

मननादिसहायोऽत्र विचारोऽयं विधीयते ।
वेदान्तविषयात्मैक्यप्रतिबन्धनिरासतः ॥ ६६ ॥

विचारोऽयं सविषयः सप्रयोजनमुच्यते ।
ब्रह्मात्मैक्यपरत्वेन श्रुतीनां विषयो हि तत् ॥ ६७ ॥

प्रयोजनं च तद्बोधः कृत्स्नाविद्यानिवर्तकः ।
तस्माच्छमादियुक्तानां नित्यानित्यविवेकिनाम् ॥ ६८ ॥

विरक्तानां मुमुक्षूणां विचारोऽयं विधीयते ।
अविद्यावृत्तयस्स्वात्मसुखज्ञानादयो यथा ॥ ६९ ॥

तथा माया[1]मयेशस्य सर्व[2]निर्वाहकारिणी ।
एषाविद्या च माया च मोहामोहविभेदतः ॥ ७० ॥

---

1. महेश–मु.
2. ग्रीवा–ग.

नामरूपप्रपञ्चस्य बीजं सद्ब्रह्म[1]चिन्मयम् ।

[जगतः सत्कार्यत्वम्]

सदेव लोके सर्वत्र कारणत्वेन दृश्यते ॥ ७१ ॥

तदवस्था विशेषो हि कार्यमित्यभिधीयते ।

कार्यमेतत्समस्तं च ब्रह्मण्यं दृश्यते जगत् ॥ ७२ ॥

[जगद्दर्शनस्य भ्रमरूपता]

सति स्फुरति निस्सङ्गे सङ्गधीर्नामरूपयोः ।

अतस्मिंस्तन्मतित्वेन-भ्रान्तिरित्यभिधीयते ॥ ७३ ॥

एवं प्रपञ्चितोऽध्यासः स विलासस्य कारणम् ।

[ब्रह्मज्ञानात् भ्रमनिवृत्ति ततो मोक्षश्च]

ब्रह्मात्मैक्यपरिज्ञानाद्वेदान्तोत्थान्निवर्तते ॥ ७४ ॥

तन्निवृत्तौ स्वयं तिष्ठेत्परमानन्दचिद्घनः ।

एयमेव ब्रह्मभावव्यक्तिमुक्तिरुदीर्यते ॥ ७५ ॥

[भास्करदर्शनम्]

जडाजडात्मकास्सर्वे वस्तुराशिरदोषतः ।

ब्रह्मणः परिणामोऽयं तद्रूपस्यानुवर्तनात् ॥ ७६ ॥

एतेषु सच्चिदानन्दरूपत्वं परिदृश्यते ।

एतद्विकारस्त्वज्ञानात्संसारः परिवर्तते ॥ ७७ ॥

---

1. सन्म—ग.

तद्ज्ञानान्मुक्तिरित्येव भास्करीयाः प्रचक्षते ।

[शब्दब्रह्मवादः शब्दार्थज्ञानस्य मुक्तिसाधनता च]

एवमेव हि ते ब्रूयुश्शब्दब्रह्मत्ववादिनः ॥ ७८ ॥

मुख्यः शब्दः परामृश्यः तद्बोध्यं ब्रह्मचिन्मयम् ।
तादात्म्यमनयोर्योगः तद्बोधात्तत्त्वविन्मतः ॥ ७९ ॥

स्वप्रभत्वादकर्मैव वचनेकर्तृतां श्रयेत् ।
स्थितमर्थात्मनस्तत्त्वादभेदेनैव वाचकम् ॥ ८० ॥

अर्थोऽपि प्रतिभाकारो बुद्धौ स्फुरति भिन्नवत् ।
आदर्शमुखवद्योगस्तयोस्तत्रावभासते ॥ ८१ ॥

यश्च गामानयेत्यादौ वृद्धानां व्यवहारतः ।
सङ्केतस्सोऽपि शब्दार्थावभिन्नौ दर्शयत्यलम् ॥ ८२ ॥

शब्दाद्यर्थव्यवहृतिः सामानाधिकरण्यतः ।
सर्वत्र दृश्यते नित्यं तेनाध्यासस्तयोर्मिथः ॥ ८३ ॥

वर्णोपाधिविभिन्नं तच्छब्दतत्त्वं तु वाचकम् ।
वाच्यं तु सिद्धासाध्यात्मा निरंशं ब्रह्मतत्त्वतः ॥ ८४ ॥

एवं ज्ञानं तु मोक्षस्य साक्षात्कारणमुच्यते ।

[क्रीडाब्रह्मवादनिरूपणम्]

स्वेनैव सृष्टे जगति प्रतिबिम्बात्मनात्मना ॥ ८५ ॥

जीवेनाविश्य तत्रेशो व्याकर्ता नामरूपयोः ।
भवामीतीच्छया ब्रह्मक्रीडतीत्यवबोधनम् ॥ ८६ ॥

मोक्षस्य साधनमिति केचिदत्र प्रचक्षते ।

[उक्तब्रह्मवादानां व्यासप्रणीतत्वम्]

एतेषां ब्रह्मवादानां प्रणेता व्यास एव हि ॥ ८७ ॥

वैदिकानीति शास्त्राणि दर्शितानि क्रमेण षट् ।

इति शिवतत्त्वरत्नाकरे नवमकल्लोले सांख्ययोगवेदान्तमतनिरूपणं नाम पञ्चमस्तरङ्गः

—o—

## नवमकल्लोले षष्ठस्तरङ्गः

—o—

[अवैदिकदर्शनानि तेषां संख्या च]

पूर्वं वैदिकशास्त्राणि सङ्ग्रहाद्[1]र्शितानि षट् ।
अवैदिकानि शास्त्राणि साम्प्रतं वर्णयामहे[2] ॥ १ ॥

तानि लोकायतं बौद्धमार्हतं चेति वै त्रिधा ।

[लोकायतमतनिरूपणम्]

तत्रादौ सङ्ग्रहत्वेन लोकायतमतं ब्रुवे ॥ २ ॥

मानं प्रत्यक्षमेवैकं मेयं क्ष्मादिचतुष्टयम् ।
आत्मा देहो मृतिर्मुक्तिरिति लोकायते स्थितिः ॥ ३ ॥

धूमादिदर्शनाल्लोके यदग्न्याद्यनुमीयते ।
न तत्प्रमाणं कुत्रापि व्यभिचारस्य संभवात् ॥ ४ ॥

रागद्वेषभ्रमादिभ्यो वदन्ति जगति[3]स्थिताः ।
तस्मान्न शब्दप्रामाण्यं विस्रम्भादुपलभ्यते ॥ ५ ॥

पृथिवी सलिलं तेजो वायुश्चेति चतुष्टयम् ।
प्रमेयं न [4]नभस्तस्य प्रत्यक्षेणानिरीक्षणात् ॥ ६ ॥

---

1. र्शनानि–ग.
2. अत्र 'वर्णयाम्यहम्' इति पाठो युज्यते ।
3. क्षिताः–मु.
4. न भीस्तस्य–मु.

वस्तूनां गोघटादीनां जन्मध्वंसौ स्वभावतः ।
अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः ॥ ७ ॥

केनेदं निर्मितं तस्मात्स्वभावाच्चद्व्यवस्थितिः ।
सुखं [1] देहान्तरे भोक्तुं दुःखं वा देहतः परम् ॥ ८ ॥

न स्यादुत्क्रममाणस्य मृतिकालेष्वदर्शनात् ।
देह एव हि चैतन्यं तद्धर्मैः सह दृश्यते ॥ ९ ॥

अन्यत्र तददृष्टेश्च न ततोऽन्योस्ति चेतनः ।
स्वभाविकी मनुष्याणां तिरश्चामिव या मृतिः ॥ १० ॥

स एव मोक्षो निर्यत्नात्सिद्धः पुनरनुद्भवात् ।

[बौद्धमतनिरूपणम्]

अतः परं तु बौद्धानां मतिस्थितिरुदीर्यते ॥ ११ ॥

प्रत्यक्षानुमिती माने प्रमेयं स्कन्धपञ्चकम् ।
बन्धो विकल्पस्तन्मुक्तिः मुक्तिरित्यभिधीयते ॥ १२ ॥

साक्षात्त्वान्नानुमेयत्वं ज्ञानाकारत्वशून्यता ।

[चतुर्विध बौद्धप्रभेदाः तेषां मतानि च]

पृथग्वदद्भिरर्थस्य स्थितं बौद्धं चतुर्विधम् ॥ १३ ॥

आद्यो वैभाषिको बुद्धः शिष्यः सौत्रान्तिकः परः ।
योगाचारस्तृतीयोऽत्र तुर्यो माध्यमिकस्तथा ॥ १४ ॥

अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते ।
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥ १५ ॥

1. लोका-ग.

आकारसहिता बुद्धिर्योगाचारस्य सम्मता ।
न सन्नासन्नसदसन्नापि चाप्युभयात्मकम् ॥ १६ ॥

चतुःकोटिविनिर्मुक्तं शून्यं माध्यमिको जगौ ।
एतेषां सुगतो देवो विश्वं च क्षणभङ्गुरम् ॥ १७ ॥

प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा ।
दुःखमायतनं चैव ततस्समुदयो मतः ॥ १८ ॥

मार्गश्चेत्यपि तत्त्वानि चत्वारि क्रमतो ब्रुवे ।

[पञ्चस्कन्धाः तेषां लक्षणं तदुपपादनं च]

दुःखं संस्कारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ॥ १९ ॥

स्कन्धाः स्युस्सुगतेनोक्ता रूपविज्ञानवेदिना ।
संज्ञाः संस्कार इत्येवं ते कथ्यन्तेऽत्र लेशतः ॥ २० ॥

शब्दस्पर्शादि यो रूपं संविद्विज्ञानमिष्यते ।
वेदना सुखदुःखादिसंज्ञावस्त्वभिधायिनी ॥ २१ ॥

[1] संस्कारो वासनानादिः पूर्ववेद्यानुभूतिमान् ।
पञ्चेन्द्रियाणि शब्दा[2]द्या विषयाः पञ्चमानसम् ॥ २२ ॥

धर्मायतनमेतानि द्वादशायतनानि तु ।
रागादीनां गुणो यस्मात्समुदेति नृणां हृदि ॥ २३ ॥

---

1. संसारो-ग. मु.
2. द्वा-मु.

आत्माऽऽत्मीयस्वभावाख्यः स स्यात्समुदयः स्मृतः ।

[बौद्धाभिमता मुक्तिः तदुपायश्च]

क्षणिकास्सर्वसंस्कारा इति या वासना स्थिरा ॥ २४ ॥

स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ।
तदेतत् क्षणिकं सर्वं सत्वादर्थक्रियाकृतेः ॥ २५ ॥

अर्थक्रिया समर्थत्वं सत्वं वस्तुषु निश्चितम् ।
ज्ञानसन्तानमात्मानं विचित्राकारदर्शनैः ॥ २६ ॥

[1] बाध्यमानो विकल्पोऽयं बाधात्मा समुदीरितः ।
तस्माद्बुद्धोपदेशात्तैरहिंसाऽक्षजयादिभिः ॥ २७ ॥

आत्मानं विमलीकुर्वन् अभ्यसेत्तत्र भावनाः ।
दुःखं स्वलक्षणं शून्यं निरात्मेति च भावयेत् ॥ २८ ॥

निर्मलज्ञानसन्तानरूपस्सन्मुक्त उच्यते ।
जडाजडात्मनोयोगमयुक्तं बाह्यतद्धियोः ॥ २९ ॥

[2] रटन्तः केचिदाचख्युर्ज्ञानेऽर्थप्रतिबिम्बनम् ।
रागाद्यज्ञानसन्तानवासनोच्छेदसंभवः ॥ ३० ॥

चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ।

[आर्हतमतनिरूपणम्]

अथ जैनमतं वक्ष्ये तस्यार्हस्तु प्रवर्तकः ॥ ३१ ॥

---

1. बाध–ग.
2. रथन्तः–ग., दधतः–मु.

स्पष्टास्पष्टे विधौ माने प्रमेयं सप्ततत्त्वकम् ।
बन्धनं कर्म तन्मुक्तिर्मुक्तिरित्याद्युदाहृता ॥ ३२ ॥

स्पष्टं प्रत्यक्षमित्युक्तमस्पष्टमनु[1]मीयते ।
आपोदेशानसुप्तस्य बुद्धिः सार्थादुमीयते ॥ ३३ ॥

[जीवादि सप्ततत्त्वानि]

[2]जीवाजीवावास्रवाश्च निर्जरः संवरो भवः ।
मोक्षश्चेत्यत्र तत्त्वानि सप्तोक्तानि जिनागमे ॥ ३४ ॥

[जीवलक्षणं तत्प्रभेदश्च]

जीवोऽत्र चेतनः स्थायी भिन्नोऽभिन्नश्च संविदा ।
बद्धमुक्तानादिसिद्धभेदात्स त्रिविधो मतः ॥ ३५ ॥

[अजीवः]

अजीवः पुद्गलाकाशः पुण्यापुण्यात्मना स्थितः ।
सर्वेऽप्यसावस्थिकायो यतोऽस्तीत्येव [3]शब्द्यते ॥ ३६ ॥

पुद्गलाः क्ष्मापयस्तेजो वायुस्थावरजङ्गमाः ।
पूरणाद्गलनात्स्वाङ्गैरेते पुद्गल संज्ञिताः ॥ ३७ ॥

आकाशस्त्ववकाशात्मा स लोको नेति स द्विधा ।
विहितार्थवशो धर्मो निषिद्धार्थवशः परः ॥ ३८ ॥

[आस्रवः]

आत्मानं सङ्गमय्यार्थैः सततं स्रावयन्ति याः ।
आस्रवा इति ताः [4]प्रोक्ताश्चक्षुरादि प्रवृत्तयः ॥ ३९ ॥

---

1. मिव्यते–ग., मेव्यते–मु.
2. जीवेऽजीवो वास्तवश्च–मु.
3. शब्दिते–ग.
4. ख्याता–मु.

[संवरः]

निषेधेभ्यो यथाऽक्षाणां प्रत्याहारोऽपि रागजः ।
स तत्प्रवृत्तिराख्याता सती संवरसंज्ञिता ॥ ४० ॥

[निर्जरः]

अनादिदोषकलुषं या शोधयति चेतनम् ।
तपश्चर्यात्मिका सोक्ता प्रवृत्तिर्निर्जराभिधा ॥ ४१ ॥

[भवः]

चतुष्टयद्वयं बन्धः कर्मणां घात्यघातिनाम् ।
मोक्षस्य परिपन्थ्यर्थमनुकूलं परं पुनः ॥ ४२ ॥

न सम्यग्ज्ञानतो मोक्षो नह्यतो वस्तु जायते ।
इति धीर्येन तज्ज्ञानावरणीयमिहोच्यते ॥ ४३ ॥

नार्हताद्दर्शनान्मुक्तिरिति भ्रान्तिर्यथा भवेत् ।
दर्शनावरणीयं तत्कर्मघात्युक्तमर्हता ॥ ४४ ॥

नानातीर्थकरोक्तीनां विशेषानवधारणम् ।
येन तन्मोहनीयाख्यं कर्मसन्देहमज्जनात् ॥ ४५ ॥

सन्मोक्षमार्गनिष्ठानामन्तरायो यदा भवेत् ।
तदन्तरायकं कर्म मोक्षोपायविघायकम् ॥ ४६ ॥

शुक्लादेर्देहमूलस्य पुद्गलस्य प्रवर्तकम् ।
बन्धो विमुक्त्यघातीतं कर्मोक्तं वेदनीयकम् ॥ ४७ ॥

कुलनाद्यात्मतां तस्य कुर्वन्नामिकमुच्यते ।
गोत्रिकं सुखदुःखादिमुक्तौ सूक्ष्मं पुरातनम् ॥ ४८ ॥

एतावदायुरस्येति यन्नियच्छति देहिनः ।
तदायुष्कमिति प्रोक्तमष्टधा कर्मबन्धकम् ॥ ४९ ॥

[मोक्षः]

वर्धमानादिभिः प्रोक्तं धर्ममुत्तममाचरन् ।
सर्वस्मिन् कर्मणि क्षीणे तत्त्वविन्मुच्यते भवात् ॥ ५० ॥

स्वाभाविकस्य सार्वज्ञ्ये व्यक्ते पुंसो निरावृतेः ।
सततोर्ध्वगतिर्मुक्तिरलोकाकाशताधरा ॥ ५१ ॥

देह एवात्मविज्ञानादन्यत्र तदबोधतः ।
देहप्रमाणतामस्य सङ्गिरन्ते जिनाश्रिताः ॥ ५२ ॥

अवैदिकानि शास्त्राणि त्रीण्येतानि समासतः ।

[पाञ्चरात्रागमरीत्या तत्त्वनिरूपणम्]

पाञ्चरात्रे वासुदेवप्रणीते विषया इमे ॥ ५३ ॥

भगवान् चिदचिच्चेति त्रयोऽर्था वैष्णवे स्थिताः ।
मुक्तिश्चाविद्यकाच्छन्दा[1]त्पापत्युद्भूतविद्यया ॥ ५४ ॥

[विष्णुस्वरूपकथनम्]

सत्यं ज्ञानमनन्तं च सुखं निर्दोषकल्मषम् ।
षाड्गुण्यसंभृतं ब्रह्म भगवान् विष्णुरुच्यते ॥ ५५ ॥

[लक्ष्म्याः चिन्मयीस्वरूपत्वम्]

तस्य स्वात्मपरामर्शो जाड्यहारी सदोदितः ।
स्वभावाच्चित्रशक्तिर्हि शब्दब्रह्मेति गीयते ॥ ५६ ॥

---

1. प्रयात्यु–मु.

सैव देवी महालक्ष्मीरिच्छाज्ञानक्रियागुणा ।
चिन्मयीकृततत्त्वौघा पूर्णाहन्ता हरेरसौ ॥ ५७ ॥

सैवोन्मिषति शब्दार्थसमन्वितपुरीश्वरी ।
करणीभूय देवस्य निर्वहत्यखिलाः क्रियाः ॥ ५८ ॥

[लक्ष्मीनारायणात्मस्वरूपेण षड्गुणानां उत्पत्तिः]

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षट् गुणाः ।
प्रादुर्बभूवुः प्रथमं लक्ष्मीनारायणात्मनः ॥ ५९ ॥

स्वान्यप्रकाशकत्वे या शक्तिस्तज्ज्ञानमिष्यते ।

[लक्ष्म्याः जगद्रूपत्वकथनम्]

प्रकृतित्वं समस्तस्य जगतश्शक्तिरुच्यते ॥ ६० ॥

तदा सृष्ट्यादिकरणेऽप्यश्रमत्वं बलं मतम् ।
इच्छाविघातराहित्यमैश्वर्यं तस्य सर्वगम् ॥ ६१ ॥

प्रकृतित्वेऽपि जगतां वीर्यं स्यान्निर्विकारता ।
पराभिभवसामर्थ्यं तेजो दुर्ग्रहताऽथवा ॥ ६२ ॥

[वासुदेवादीनामप्राकृतव्यूहत्वम्]

यत्रैते स्तिमिताष्षट् च वासुदेवः परो हि सः ।
सममुन्मिषितास्ते चेद्वासुदेवस्तु सोऽपरः ॥ ६३ ॥

तत्र ज्ञानबलोद्रेके स सङ्कर्षण उच्यते ।
वीर्यैश्वर्यसमुन्मेषे प्रद्युम्नाख्यां प्रपद्यते ॥ ६४ ॥

अनिरुद्धः स तु भवेदाधिक्ये शक्तितेजसोः ।
शब्दं सिसृक्षुर्नादाख्यमुन्मेषं श्रीः समश्नुते ॥ ६५ ॥

ततो बिन्दुः ततः शक्तिः ततो वर्णाः समुद्गताः ।
वाचः पराद्या नादाः स्युः वासुदेवादिवाचकाः ॥ ६६ ॥

[केशवादिविभवदेवाः]

व्यूहेश्वरेभ्यः सञ्जाता मूर्तयः केशवादिकाः ।
अवता[1]राश्च मत्स्याद्यास्तेभ्यो रक्षार्थमुद्गताः ॥ ६७ ॥

विभवाः पद्मनाभाद्या एतस्मात्सकृदुद्गताः ।
क्षीरार्णवादिस्थानेषु प्राकृतेष्वपि ते स्थिताः ॥ ६८ ॥

[परिवारदेवताः]

विश्वक्सेनखगेन्द्राद्याः परिवारा इमे हरेः ।
इत्थं हि भगवानर्थः सप्रपञ्चो निरूपितः ॥ ६९ ॥

[चिद्रूपजीवलक्षणम्]

[2] चिदात्माऽथ द्वितीयोऽर्थो वर्ण्यते शास्त्रदृष्टितः ।
अनाद्यविद्यया बद्धाश्रितो भगवदंशकाः ॥ ७० ॥

जीवा विलीनषाड्गुण्याः कर्माशयविपाकिनः ।
अविद्या पञ्चपर्वोक्ता तमो मोहादि विग्रहा ॥ ७१ ॥

कर्माशयविपाकाश्च सांख्यप्रवचने पुरा ।
मायया सङ्कुचज्ज्ञाना अशक्तेरणवश्च ते ॥ ७२ ॥

अस्मान्निर्यान्ति सृष्ट्यादौ जीवा लीना लये पुरा ।
तस्य स्फुरत्ता सा लक्ष्मीः शक्तिसंज्ञा तदोद्गता ॥ ७३ ॥

---

1. ताराद्य–ग.
2. चिदक्षरमाथ–मु.

[अचिल्लक्षणम्]

अचिदर्थस्ततो जातो नियत्यादिरनेकधा ।
ततः प्रसूतिर्ब्रह्मादिजननात्सैव कथ्यते ॥ ७४ ॥

लक्ष्मीः पुरुषशक्त्याख्या भारत्या नियतिस्थया ।
सार्धं कालस्थया काल्या विदधे मिथुनत्रयम् ॥ ७५ ॥

शक्तिर्लक्ष्मीः चतुर्वक्त्रे भारत्याख्या पिनाकिनि ।
उमा विष्णौ महाकाली प्रसूता [1]प्राविका जनुः ॥ ७६ ॥

वाग्विधी श्रीहरी गौरीहरौ दाम्पत्यमापितौ ।
क्रमात्सृष्टौ स्थितौ ध्वंसे नियुक्तौ प्राकृताध्वनि ॥ ७७ ॥

गुणत्रयात्मिका माया पुंसां भोग्येन्द्रियप्रसूः ।
प्रकृतिस्तन्निदानत्वात्सौक्ष्म्याच्चामुक्तमुच्यते ॥ ७८ ॥

महदादि पृथिव्यन्ततत्त्वानामावलिस्तथा ।
इत्थमर्थास्त्रयः प्रोक्ताः परबोधार्णवोर्मयः ॥ ७९ ॥

[वैष्णवदीक्षास्वरूपं तत्फलं च]

पाञ्चरात्रोदितां दीक्षां सुकृती प्राप्य सद्गुरोः ।
ब्रह्म ज्ञात्वा पदं शुद्धं [2]याति त्यक्त्वाऽध्वनोऽशुचीन् ॥ ८० ॥

विष्णुस्तत्त्वं पञ्चविंशं स तु स्वातन्त्र्यवान् मतः ।
परस्य वासुदेवस्य ज्ञानं सन्मुक्तिसाधनम् ॥ ८१ ॥

एकत्र ध्यानसक्तास्तु व्यूहेषु विभवेषु [3]च ।
अधिकारानुसारेण तत्सालोक्याद्यवाप्नुयुः ॥ ८२ ॥

---

1. प्रापिता–मु.
2. यातीत्युक्त्वा–ग.
3. वा–मु.

प्राप्ता दिव्यं नभोरूपं तद्विष्णोः परमं पदम् ।
तत्त्वानावृतबोधत्वादिन्द्रियाद्यनपेक्षिणः ॥ ८३ ॥

षाड्गुण्यविग्रहाः स्वात्मसुखतृप्ता निराशयाः ।
अपुनर्भाविनो विष्णुं सदा पश्यन्ति सूरयः ॥ ८४ ॥

इतिहासपुराणानामयं तु विषयो मतः ।
वैदिकानां च धर्माणां साङ्ख्ययोगानुसारिणाम् ॥ ८५ ॥

शैवपाशुपतानां च पाञ्चरात्रप्रवर्तिनाम् ।
वंशमन्वन्तराणां च सृष्टिसंहारयोरपि ॥ ८६ ॥

अन्येषामपि धर्माणां प्रपञ्चस्तत्र दृश्यते ।

[पाशुपतदर्शनम्]

शास्त्रे पाशुपते त्वेवं प्रमेयानां [1] व्यवस्थितिः ॥ ८७ ॥

बहवो व्यापिनो नित्या आत्मानो निर्मलास्तथा ।
[2] आणवं [नमलं] [3] नवलं ते [पामनादिरिह] पां आत्मानादीह
विद्यते ॥ ८८ ॥

मायाकर्मजपाशाभ्यां भिद्यमानाश्चिरं नराः ।
सुखं दुःखं च संसारं सर्वदाऽनुभवन्ति हि ॥ ८९ ॥

विरक्तौ तु प्रवृत्तायां शास्त्रोक्तेन क्रमेण तु ।
दीक्षितेष्वीश्वरज्ञानगुणसंक्रान्तिभाग्भवेत् ॥ ९० ॥

---

1. मव-ग.
2. श्री शंभुदेवकृत "शैवसिद्धान्तदीपिकायां" आत्मनो ...... बहवो ...... एतेषामाणवमलं नास्ति" इति आत्मनां मलराहित्यमुच्यते । (पु. १०)
3. तत्फलं-मु. ?

कुटुम्बभारं पुत्रेषु सन्न्यसन्निव चेतनः ।
संक्रमय्यात्मसु ज्ञानमीश्वरः स्वाधिकारतः ॥ ९१ ॥

भजत्युपरतिं चान्ते ततश्च स्वयमीदृशः ।

[महाव्रतम्]

महाव्रते त्वाणवादित्रिमलानां शरीरिणाम् ॥ ९२ ॥

ज्ञानशक्तिरिवैकैव न क्रियाशक्तिसंभवः ।
दीक्षायुक्ता विधानेन सर्वथैवास्थि धारिणः ॥ ९३ ॥

शास्त्रोक्तचर्यानिरता मुक्तिमश्नुवतेऽखिलाः ।
तेमुक्ताः केवलज्ञानशक्तिमन्तो भवन्ति हि ॥ ९४ ॥

ज्ञानक्रियाख्यशक्ती तु वर्तेते परमेश्वरे ।
एवं महाव्रते रीतिः

[कापालिकदर्शनम्]

कापाले त्वथ कथ्यते ॥ ९५ ॥

महाव्रतोक्तरीत्यैव ज्ञेयं बन्धात्मलक्षणम् ।
शास्त्रोक्तरीत्या दीक्षां तु कृत्वैकध्वजसंयुते ॥ ९६ ॥

देशे क्वचिच्चा[1]धिवसन्भिक्षां नित्यमटन्नपि ।
तिष्ठन्महाव्रत इव मुक्तिरत्रापि कीर्तिता ॥ ९७ ॥

कापालपाशुपतयोर्महाव्रतमतस्य च ।
मायाविद्यातत्त्वसंस्थास्त्रयो रुद्राः प्रवर्तकाः ॥ ९८ ॥

मुख्यैश्चतुर्भिर्देवस्य सद्योजातादिनामभिः ।
चत्वारोऽनुगृहीता ये तत्तन्नाम समन्विताः ॥ ९९ ॥

---

1. न्निव–मु.

[चत्वारि तन्त्राणि]

अधः स्रोतांसि चत्वारि तैस्तन्त्राणि प्रजज्ञिरे ।
गारुडं दक्षिणं वामं भूतं चेति विभागतः ॥ १०० ॥

[गारुडतन्त्रम्]

तत्र गारुडतन्त्रे तु ब्रह्म तत्पुरुषात्मकम् ।
पूजयित्वा विशेषेण ध्यातव्यमिति कीर्त्यते ॥ १०१ ॥

तन्त्रेणानेन [1] सर्पादिविषाणां तु चिकित्सने ।
मन्त्रौषधानि प्रोक्तानि विशेषेण परिस्फुटम् ॥ १०२ ॥

[दक्षिणतन्त्रम्]

तन्त्रे तु दक्षिणेऽघोरं ब्रह्मेति परिभाव्य च ।
पूजयित्वा तदेवैकं साक्षात्कार्यमितिरितम् ॥ १०३ ॥

मन्त्राः प्रयोगास्तत्रोक्ताः शत्रूणां विजयावहाः ।

[भूततन्त्रम्]

भूततन्त्रे तु कथितं सद्योजातस्य वैभवम् ॥ १०४ ॥

भूतप्रेतपिशाचादिशान्त्यै मन्त्रौषधानि च ।

[वामतन्त्रम्]

शाक्तं तु तन्त्रं केनापि शक्तितत्त्वनिवासिना ॥ १०५ ॥

आत्मना संप्रणीतं तु भास्करीयमतानुगम् ।
तत्त्वानि तन्त्रे शाक्तेये षट्त्रिंशत्पुरुषाः पृथक् ॥ १०६ ॥

देवीप्रसादतो भक्ता मुच्यन्त इति कीर्तितम् ।
जडाजडात्मकं तस्य परिणाम इति स्थितिः ॥ १०७ ॥

---

1. सर्वा-ग.

अधः स्रोतांसि चत्वारि तन्त्राण्येतान्यनुक्रमात् ।
साक्षादेव प्रणीतानि शम्भुना परमेष्ठिना ॥ १०८ ॥

कौलादिगीततन्त्राणि म[च्छे]त्स्येन्द्राद्यैश्च मानुषैः ।
सिद्धैरेवोपदिष्टानि तत्त्वविद्भिः पुरातनैः ॥ १०९ ॥

[सिद्धान्तशास्त्रस्य स्वरूपम् ]

सिद्धान्तशास्त्रं द्विविधं शिवरुद्रविभेदतः ।
बिन्दुशक्तेर्नादबिन्दुप्रणवात्मकताजुषः ॥ ११० ॥

अनन्तरं परिणते शिवानन्देशसंख्यया ।
ततोमायाध्वविज्ञानकेवलाख्या भृतां तथा ॥ १११ ॥

ईश्वरानुगृ[1]हीतानां कामिकादि समाख्यया ।
सद्योजाताद्वामदेवमुखाच्च दश जज्ञिरे ॥ ११२ ॥

ईशोपदिष्टज्ञानानामष्टाधिकदशात्मनाम् ।
रुद्राणां पुरुषाघोरेशानाख्यैर्वदनैस्तथा ॥ ११३ ॥

जयादिसंज्ञयोक्तानि रुद्रभेदाह्वयानि तु ।
अष्टादश मिलित्वा तान्यष्टविंशतिकोटयः ॥ ११४ ॥

एकैकं तत्र शास्त्रं तु कोटिग्रन्थसमन्वितम् ।
एतेषामपि शास्त्राणां नाम सिद्धान्त इत्यपि ॥ ११५ ॥

जयं ज्ञानक्रियायोगचर्याभिः स्याच्चतुष्पदम् ।

[तत्र ज्ञानपादे प्रतिपाद्यविषयाः]

ज्ञानपादे महेशस्य स्वरूपं प्रतिपाद्यते ॥ ११६ ॥

---

1. ह्यात्तामां-मु.

विज्ञानाकलनाम्नश्च प्रलयाकलकस्य च ।
सकलाकलनाम्नश्च [1]स्वरूपाण्यात्मनामपि ॥ ११७ ॥

पाशानामपि पञ्चानां स्वरूपमपि विस्तरात् ।
सृष्टेः प्रकारः शक्तेश्च स्वरूपमपि विस्फुटम् ॥ ११८ ॥

परमेश्वरमारभ्य भुवनानां पृथक् पृथक् ।
इयन्ति योजनानीति परिमाणक्रमस्तथा ॥ ११९ ॥

भुवनानां तदीशानामपि रूपं विशेषतः ।
तत्तत्प्रलयतः पश्चात्सृष्टेश्चापि प्रवर्तनम् ॥ १२० ॥

महाव्रतादिशास्त्राणां प्रमेयनियमस्तथा ।
एवमाद्यानि बहुधा प्रतिपाद्यानि तत्र हि ॥ १२१ ॥

[क्रियापादे प्रतिपाद्यविषयाः]

क्रियापादे तु मन्त्राणामुद्धारस्तु प्रकीर्त्यते ।
सन्ध्यावन्दनपूजादिजपहोमाश्च सर्वशः ॥ १२२ ॥

समयानां विशेषश्च निर्वाणानां च संस्क्रिया ।
आचार्यस्याभिषेकश्च दीक्षा चैव सुखप्रदा ॥ १२३ ॥

[योगपादे प्रतिपाद्यविषयाः]

योगपादे तु षट्त्रिंशतत्त्वानि च तदीश्वराः ।
इच्छतामैहिकीं सिद्धिमणिमादेश्च संभवः ॥ १२४ ॥

मूलाधारादिचक्राणामवस्थानां च कथ्यते ।

[चर्यापादे प्रतिपाद्यविषयाः]

चर्यापादे तु सर्वत्र पवित्रारोपणं तथा ॥ १२५ ॥

---

1. रूपाण्यानात्म–ग.

प्रतिष्ठा चैव [1]देवानां व्यक्तानां लक्षणानि च ।
प्रायश्चित्तक्रियाश्चापि स्कन्द[2]नन्द्यादिलक्ष्म च ॥ १२६ ॥

लक्षणं जपमालानामन्त्येष्ट्यादिक्रमा अपि ।
एवं चतुर्षु पादेषु प्रतिपाद्यार्थ ईरितः ॥ १२७ ॥

प्रायो मतान्तराण्येवं वर्णितानि क्रमान्मया ।
तत्त्वेषु तूपविश्रान्तिस्तत्तन्मतनिषेविणाम् ॥ १२८ ॥

[सङ्ग्रहेण सर्वदर्शनाभिप्रायः]

अधुना कथ्यते सम्यक् सर्वेषामपि तं शृणु ।
उद्भित्स्वेदोद्भवाण्डोत्थजरायुजदिवौकसः ॥ १२९ ॥

तन्मात्रोद्भूतभूवारिवह्निवातवियन्मया ।
गन्धो रसश्च रूपं च शब्दस्स्पर्श इति स्फुटम् ॥ १३० ॥

भूताद्यहंकृतेर्जातं तन्मात्रं जन्तुजीवनम् ।
कर्मेन्द्रियं तु वाक्पाणिपादोपस्थगुदाभिधम् ॥ १३१ ॥

वैकारिकाहंकृतेश्च जातमेषां गुणा अपि ।
वचनादानगमनानन्दत्यागास्तदात्मसु ॥ १३२ ॥

[3]चिल्लिका कपिकस्तूरीमृगाश्वगवया हताः ।
श्रोत्रत्वङ्नेत्ररसनाघ्राणज्ञानेन्द्रियाह्वयम् ॥ १३३ ॥

तैजसाहंकृतेर्जातमेषां ग्राह्यगुणा अपि ।
स्थूलस्पर्शरसशब्दरूपगन्धास्तदात्मसु ॥ १३४ ॥

---

1. अङ्गानां–ग.
2. सन्ध्या–मु.
3. क्षिल्लिका–म.

एणमातङ्गशलभमत्स्यभृङ्गा वशीकृताः ।
प्रत्यक्षमानाश्चार्वाका मनसा चारुभोगिनः ॥ १३५ ॥

गर्वप्रवर्तका [1] जैनाः पञ्चाणुव्रतमानिनः ।
बौद्धा विचित्रबुद्धिस्था ग्रन्थैष्षोडशलक्षणैः ॥ १३६ ॥

अव्यक्ततत्त्वसंभूतगुणतत्त्वं त्रिधा स्थितम् ।
सत्वं रजस्तमस्सौख्यदुःखमोहाश्च तद्गुणाः ॥ १३७ ॥

गौणः पुराणनिकरः स ब्रह्माच्युतरुद्रभूः ।
गुणिनो विधिवैकुण्ठरुद्रभक्ताः पुराणिकाः ॥ १३८ ॥

सांख्याः स्युः पुंप्रकृत्याढ्याः कापिलाश्छन्दसा मताः ।
वैशेषिकाः स्युः काणादा नैरुक्तारागरञ्जिताः ॥ १३९ ॥

विद्याढ्याः शाब्दिकाः साक्षपादा नैयायिका मताः ।
शैक्षाः कालोन्नतानेशसांख्याः पातञ्जलान्विताः ॥ १४० ॥

मीमांसका जैमिनीया निमित्ता कल्प[2]कारिणः ।
कापालिका ज्यौतिषिकाः कालस्थाः कालवासिनः ॥ १४१ ॥

वैदिका व्याससंसिद्धा मायाढ्या ब्रह्मवादिनः ।
षण्मताङ्गाष्षडङ्गाढ्यास्ते मायावादिनो मताः ॥ १४२ ॥

इत्याद्यज्ञानमूढानां मतमाश्रित्य दुर्धियः ।
अपवर्गम[3]भीप्सन्ते खद्योतात्पावकार्थिनः ॥ १४३ ॥

---

1. श्रैव-मु.
2. कर्मिणः–ग.
3. भीच्छन्ति-मु.

यत्कैवल्यं पुंप्रकृत्योर्विवेकात्
यद्वा सर्वं ब्रह्म मत्वा विरामः ।
या वा काश्चिन्मुक्तयः पाशजन्याः
तास्तास्सर्वा भेदमायान्ति सृष्टौ ॥ १४४ ॥

विद्येश्वरसदेशाख्यशक्तितत्त्वचतुष्टयम् ।
क्रमाद्बिन्दुजचित्कर्मचिक्रियाषट्सरोजगम् ॥ १४५ ॥

[1] वेदान्तसिद्धान्तवी ‘शैवषट्स्थलमार्गगम् ।
इच्छाज्ञानक्रियायोगचतुष्पादरहस्यगम् ॥ १४६ ॥

यथा वृषे चतुष्पादा अन्योन्यापेक्षया स्थिताः ।
यथा त्रयी तन्त्रवृक्षे चतुष्पादाः समार्थगाः ॥ १४७ ॥

ततो मुक्तिस्त्वेकरूपा तच्चतुष्पादसंभवा ।
ज्ञानात्सायुज्यमुक्तिः स्याद्विद्यातत्वविवेकिनाम् ॥ १४८ ॥

[विविधोपनिषत्प्रतिपादितमोक्षस्वरूपम्]

तथा श्रीशिवसङ्कल्पोपनिषत्प्राह सादरम् ।
अचिन्त्यं चाप्रमेयं च व्यक्ताव्यक्तपरं च यत् ॥ १४९ ॥

सूक्ष्मात्सूक्ष्मतरं ज्ञानं तन्मे मनः शिवसङ्कल्पमस्तु ।
तथा श्रीमत्सुप्रभेदमहातन्त्रे प्रकाशते ॥ १५० ॥

संयोजितं पञ्चरूपं सायुज्यमिति [2] कथ्यते ।
ज्ञानात्सायुज्यमेवं हि तोये तोयं यथा तथा ॥ १५१ ॥

---

1. वीरसिद्धान्तवेदान्त–मु.
2. वक्ष्यते–ग.

तथा दीक्षा[1]क्रमान्मुक्तिः ईशतत्त्वविवेकिनाम् ।
तथा मैत्रेयोपनिषद्येवं मुक्तिः प्रकाश्यते ॥ १५२ ॥

[2]अप्स्वापोऽग्निरग्नौ वा व्योम्नि व्योमैव लक्षयेत् ।
एवमन्तर्गतं चित्तं पुरुषः परिमुच्यते ॥ १५३ ॥

तथा श्रीम[3]द्रौरवाख्यमहातन्त्रे प्रकीर्त्यते ।
जले जलं यथा क्षिप्तं क्षीरे क्षीरमिवार्पितम् ॥ १५४ ॥

तथैव ह्येकतां याति दीक्षामन्त्रेण मन्त्रवित् ।
मुक्तिः सदेहवसतां समुचितकर्मचर्यया ॥ १५५ ॥

तथा दत्तात्रेयसीतोपनिषत्प्राह सादरम् ।
यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् ॥ १५६ ॥

तथा समाधावैक्यं तु जीवात्मपरमात्मनोः ।
तथा श्रीमत्सुप्रभेदमहातन्त्रे प्रकाश्यते ॥ १५७ ॥

घृतात्पृथग्व्यवहितं घृते लीनं घृतं यथा ।
तत्त्वे लीनस्तथा योगी पृथग्भावं न विन्दति ॥ १५८ ॥

विद्यातत्त्वादिशक्त्यन्तकारणं बिन्दुतत्त्वकम् ।
चतुर्वेदवदोङ्कारो वृषभेपुस्वरूपकम् ॥ १५९ ॥

चतुर्वाक्यषडध्वाढ्यं शिवाधिष्ठानरूपकम् ।
नादबिन्दुकलारूपं योगमार्गैकगोचरम् ॥ १६० ॥

1. क्रिया-ग.
2. अपामपो-मु.
3. द्रौशव-मु.

तत्र स्थितानां मुक्तिस्तु समानैक्यस्वरूपिणी ।
तथा श्रीकठवल्ल्युपनिषदाह महत्तरा ॥ १६१ ॥

ऊर्ध्वमूलो ह्यधश्शाखः एषोऽश्वत्थस्सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ १६२ ॥

तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।
तथा प्रकाश्यते तन्त्रे सर्वज्ञानोत्तराह्वये ॥ १६३ ॥

सर्वशून्यं निराभासं सामरस्यं तथा भवेत् ।

शैवसिद्धो भाति मूर्ध्नीतरेषां
मुक्तस्सृष्टौ पुंव[1]रो भूतिनाथः ।
विश्वानर्थान् स्वेन विष्टभ्य धाम्ना
सर्वेशानामीशितुः सर्वदास्ते ॥ १६४ ॥

मुक्तिर्निर्वाणदीक्षायां क्रियायां स्यान्न चान्यथा ।
तस्माद्दीक्षां प्रकुर्वीत शैवीं पाशविमुक्तये ॥ १६५ ॥

इति शिवतत्त्वरत्नाकरे नवमकल्लोले चार्वाकादितन्त्रतत्तन्मतप्राप्यस्थानवर्णनं नाम षष्ठस्तरङ्गः

—o—

## नवमकल्लोले सप्तमस्तरङ्गः

—o—

[दीक्षाग्रहणकालादीनां विचारः]

या दीक्षा सर्वलोकस्य भवबन्धनिवारिणी ।
उदीरिताऽभवत्तस्याः कथं वा ग्रहणक्रमः ॥ १ ॥

को वा तद्ग्रहणे कालः किं वा तस्यामपेक्षितम् ।
केन वा सा प्रदातव्या ग्राह्या सा कीदृशेन वा ॥ २ ॥

एतत्सर्वं ममाख्याहि गुरो! ख्यातगुणाम्बुधे! ।
या पुत्र! भवता दीक्षा सुधीः श्रोतुमभीप्सिता ॥ ३ ॥

तां सदभ्यर्हितां तुभ्यं ब्रवीमि च सुविस्तरम् ।
सर्वमाकर्णयानन्यसामान्यधिषणानिधे! ॥ ४ ॥

[दीक्षापदस्य निर्वचनम्]

दीयते लिङ्गसंबन्धः क्षीयते च मलत्रयम् ।
दीयते क्षीयते येन सा दीक्षेति निगद्यते ॥ ५ ॥

[दीक्षाभेदः]

सेयं दीक्षा द्विधा[1] भिन्ना साधाराधारवर्जिता ।
आचार्यमन्तरेणैव क्रियते शङ्करेण या ॥ ६ ॥

विज्ञानकल[2]नाम्नश्च प्रलया[3]कलकस्य च ।
तीव्रशक्तिनिपातेन दीक्षा साऽऽधारवर्जिता ॥ ७ ॥

1. प्रोक्ता–वे.
2. साम्नश्च–ग.
3. कलनस्य च–वे.

गुरुमूर्तिं समाश्रित्य मन्दशक्तिनिपातनात् ।
कुरुते सकलस्येशः साधारां तामिमां विदुः ॥ ८ ॥

[साधारदीक्षाभेदः]

सा दीक्षा त्रिविधा प्रोक्ता सबीजाबीजचिन्मया ।
यथाक्रमं कर्म[1]भक्तिज्ञानकाण्डेषु ताः स्फुटाः ॥ ९ ॥

[निर्बीजदीक्षा]

अथ निर्बीजदीक्षा या द्वेधा भेदो निगद्यते ।
सद्यो निर्वाणदा [2]त्वाद्या चिरनिर्वाणदा परा ॥ १० ॥

प्रारब्धसञ्चितागामिकर्मजालं विशोध्यते ।
अतितीव्रेण [3]पातेन शरीरादि[4]जुगुप्सया ॥ ११ ॥

[5]यात्यन्तविरक्तानां सद्यो निर्वाणदा तु सा ।
प्रारब्धकर्मणां [6]भोगे यया मुक्तिमनन्तरम् ॥ १२ ॥

यान्ति बालादयः सेयं चिरं निर्वाणदा भवेत् ।

[प्रकारान्तरेण दीक्षाभेदः]

शिवस्यानुग्रहाद्दीक्षा [7]जायते कर्तृकर्मणाम् ॥ १३ ॥

---

1. शक्ति–मु.
2. विद्या–मु. ग.
3. पाकेन–वे.
4. जुगुप्स्यताम्–ग.
5. यया–वे., क्रि.
6. भोगाद्यया–वे.
7. लभ्यते कृतीनां भुवि–वे.

सा चानेकविधा प्रोक्ता तत्प्रपञ्चोऽयमुच्यते ।
समासाच्च [1] द्विधैवेयं दीक्षा तज्ज्ञैरिहेष्यते ॥ १४ ॥

एका भवेज्ज्ञानवती [2] क्रियावत्यपरा स्मृता ।
विनेज्या[3]दिककर्माणि मनोव्यापारमात्रतः ॥ १५ ॥

दीक्षाज्ञानवती प्रोक्ता सम्यक्तत्त्वावबोधि[4]का ।
इज्यानलवती या तु क्रियाकौशलसंभवा ॥ १६ ॥

[क्रियावतीदीक्षाभेदः]

क्रियावत्यथ सा द्वेधा निर्बीजा च सबीजका ।
तत्र निर्बीजका या [5] स जननीपुत्रयोर्वरम् ॥ १७ ॥

सबीजा च भवेद्दीक्षा [6] साधकाचार्ययोरपि ।

[निर्बीजदीक्षाफलं तदधिकारिणश्च]

अथ निर्बीजका दीक्षा प्रोक्ता सा द्विप्रकारिका ॥ १८ ॥

एका निर्वाणदा [7] सद्यो द्वितीया देहपाततः ।
बाल[8]बालिशवृद्धस्त्री भोगभुक्त्य[9]भिलाषिणाम् ॥ १९ ॥

---

1. द्विधासेयं–क्रि.
2. वृत्यपराङ्मुखा–मु.
3. नल–वे., क्रि.
4. जा–ग., मु. क्रि.
5. समायीपुत्र–वे.
6. बाल–मु.
7. साद्या–ग.
8. भावीश–वे.
9. र्थितात्मनाम्–वे.

भवेन्निर्बीजका दीक्षा समयाचारशुद्धिदा ।
विदुषां च समर्थानां सबीजा च परिकीर्तिता ॥ २० ॥

[सबीजदीक्षाभेदः]

सबीजा च द्विधा भिन्ना प्रथमा शिवधर्मिणी ।
धर्माधर्मात्मकं कर्म प्रागागामि विचित्रकम् ॥ २१ ॥

संस्कृत्य शोध्यते यत्र सैवोक्ता शिवधर्मिणी ।
यत्र रुद्रपदे योगो योगो यश्चेश्वरे पदे ॥ २२ ॥

अधर्मसञ्चितं सर्वं कर्मागामि विशोध्यते ।
धर्मावशेषतो यत्र सा दीक्षा लोकधर्मिणी ॥ २३ ॥

[शिवधर्मदीक्षाभेदः तल्लक्षणं च]

भौतिकी नैष्ठिकी चेति द्विधा सा शिवधर्मिणी ।
व्रतमोक्षसमायुक्ता भौतिकीति निगद्यते ॥ २४ ॥

भौतिकः काम्य इत्युक्तः सत्सन्तानक एव वा ।
शरीरपातपर्यन्तव्रता सा नैष्ठिकी मता ॥ २५ ॥

[चाक्षुषीदीक्षाभेदाः तासां नामानि च]

चाक्षुषी स्पर्शदीक्षा च वाचिकी मानसी तथा ।
शास्त्री च योगदीक्षा च होत्रीत्यादिरनेकधा ॥ २६ ॥

[चाक्षुषीदीक्षा लक्षणम्]

चक्षुरुन्मीलयन् तत्त्वं ध्यात्वा शिष्यं समीक्षयेत् ।
पाशबन्धविमोक्षाय दीक्षेयं चाक्षुषी भवेत् ॥ २७ ॥

[स्पर्शदीक्षालक्षणम्]

निधाय दक्षिणे हस्ते शिवं सर्वाङ्गसंयुतम् ।
संस्पृशेच्छिष्यमूर्धादि स्पर्शदीक्षा भवेदियम् ॥ २८ ॥

[वाग्दीक्षालक्षणम्]

तत्त्वे चित्तं समाधाय व्युत्थितान्तरचेतसा ।
उच्चरेत्संहितामन्त्रान्वाग्दीक्षेयं समीरिता ॥ २९ ॥

[मानसीदीक्षालक्षणम्]

मनस्सन्निधिमात्रेण मानसीत्यभिधीयते ।

[शास्त्रदीक्षास्वरूपम्]

शास्त्रस्य सम्प्रदानेन शास्त्रदीक्षा प्रकीर्तिता ॥ ३० ॥

[योगदीक्षारीतिः]

योगेन योगदीक्षा स्याच्छिवत्वे सा व्यवस्थिता ।

[होत्रीदीक्षा तस्याः द्वैविध्यम्]

[1]इज्या कुण्डवती होत्री सा द्विभेदा किलोदिता ॥ ३१ ॥

शक्तिपातविभेदेन पाशभेदेन सा भवेत् ।

[शक्तिपातभेदतः दीक्षाभेदः]

शक्तिपातविभेदानां वक्ष्यते लक्षणं पृथक् ॥ ३२ ॥

अधर्मधर्मयोस्साम्ये जाते शक्तिः पतत्यसौ ।
[2]आज्ञोपमादिभेदेन सा पुनः सप्तधा भवेत् ॥ ३३ ॥

---

1. राज्ञः–ग.
1. आज्ञादीक्षा–वे.

[1]गुर्वाज्ञापालने दीक्षा [2]सा चाज्ञेति प्रकीर्तिता ।
पूर्वेषां समयाचारसदृशी चोपमा स्मृता ॥ ३४ ॥

आरोप्य स्वस्तिकां शिष्यं गुरो[3]रीक्षणकर्मणा ।
स्वस्तिका कलशस्नानादभिषेकाह्वया च सा ॥ ३५ ॥

भूतिपट्टमयीदीक्षा भस्मना या प्रकीर्तिता ।
शिष्यस्य फाले गुरुणा समयाचारमार्गतः ॥ ३६ ॥

आचार्यो लिङ्गमादाय [4]समभ्यर्च्य यथाविधि ।
शिष्यस्यालोकनं सम्यगायत्ता परिकीर्तिता ॥ ३७ ॥

प्रह्वीभूय ततः शिष्यो लिङ्गं स्वीकृत्य भक्तितः ।
गुरो! [5]स्वागतमित्युक्तं स्वोत्तमाङ्गादिधारणम् ॥ ३८ ॥

[दीक्षात्रैविध्यम्]

सा दीक्षा त्रिविधा ज्ञेया वेधमन्त्रक्रियात्मिका ।

[वेधदीक्षा]

शिवासनमिति ध्यात्वा शिष्यमूर्ध्नि यथा[6]क्रमम् ॥ ३९ ॥

यः शिवत्वसमावेशो वेधदीक्षेति सा मता ।

[मन्त्रदीक्षा]

मन्त्रदीक्षेति स प्रोक्ता मन्त्रमात्रोपदेशिनी ॥ ४० ॥

---

1. सर्वा–ग.
2. ज्ञाना–वे.
3. र्दीक्षा–ग.
4. स्वयमर्च्य–ग.
5. स्वायत्त–वे.
6. गमम्–क्रि., र्णवम्–मु.

[क्रियादीक्षा]

[1] लिङ्गोपदेशिनी प्रोक्ता क्रियादीक्षा क्रियोत्तरा ।

[दीक्षितशिष्यस्वरूपम्]

रसविद्धं यथा ताम्रं ताम्रभावाद्विमुच्यते ॥ ४१ ॥

सुवर्णेन सहैकत्वं [2] गतं तद्याति हेमताम् ।
नवनीतं यथा तप्तं तत्स्वभावं परित्यजेत् ॥ ४२ ॥

घृतस्वभावमापन्नो न याति नवनीतताम् ।
यथा शुक्तिगतं तोयं मौक्तिकं जायते ध्रुवम् ॥ ४३ ॥

न पुनस्तोयतां याति मौक्तिकत्वं न मुञ्चति ।
एवं स शिवतां प्राप्तो न पुनर्जीवतां व्रजेत् ॥ ४४ ॥

शिवत्वान्न च हीयेत विमुक्तो दीक्षया भवेत् ।

[दीक्षाया गुरुकर्तृकत्वं, गुरुप्रभेदाः तेषां तरतमभावश्च]

सा दीक्षा गुरुणा कार्या स गुरुः कथ्यतेऽधुना ॥ ४५ ॥

आश्रमाणां समस्तानां गृही स्यादुत्तमो गुरुः ।
यथाऽहं सर्वलोकानां गुरुरम्बिकया सह ॥ ४६ ॥

ब्रह्मचारी द्विधा प्रोक्तो नैष्ठिको भौतिकस्त्विति ।
नैष्ठिको मध्यमो ज्ञेयो भौतिकस्तु ततोऽधमः ॥ ४७ ॥

[नैष्ठिकभौतिकयोः स्वरूपम्]

आकौमाराद्ब्रह्मचारी यावज्जीवं स नैष्ठिकः ।
व्यवस्थीकृतकालान्तं ब्रह्मचारी पुनर्गृही ॥ ४८ ॥

---

1. कुण्डमण्डलिकोपेता-सि.
2. गन्त-ग.

स भौतिक इति ज्ञेयः तौ गुरू मध्यमाधमौ ।

[वानप्रस्थयतीनां गुरुत्वे विकल्पः]

वानप्रस्थयतीनां तु गुरुत्वं नेष्यते क्वचित् ॥ ४९ ॥

स्वयमेव यतीनां तु यतिर्गुरुरथापि वा ।

[वानप्रस्थगुरोर्द्वैविध्यं तल्लक्षणं च]

वानप्रस्थो द्विधा प्रोक्तः साग्निकोऽनग्निकस्तथा ॥ ५० ॥

सदारः साग्निको ज्ञेयः त्वदारोऽनग्निकः स्मृतः ।
साग्निकस्य गुरुत्वं स्यान्नेष्यतेऽनग्निकस्य तत् ॥ ५१ ॥

[सामान्यगुरुलक्षणम्]

मठस्थलसमुत्पन्नः [1] शान्तः शैवागमार्थवित् ।
अनूचानः प्रसन्नात्मा शिवदीक्षाभिषेचितः ॥ ५२ ॥

शिवागमज्ञो मतिमच्छिवपूजापरायणः ।
रुद्राक्षमा[2]लां बिभ्राणः त्रिपुण्ड्राङ्कितमस्तकः ॥ ५३ ॥

विशुद्धदेहः कुलजः [3] शीलाचारसमन्वितः ।
[4] भस्मोद्धूलननिष्णातो भस्मतत्त्वविवेकवान् ॥ ५४ ॥

[5] वर्णाश्रमक्रियानिष्ठो [6] वेदविच्छास्त्रकोविदः ।
[7] मिताशी मितनिद्रश्च मितवाग्योगतत्परः ॥ ५५ ॥

---

1. शास्त्र–मु.
2. लाभरणः–बी. कौ.
3. शिवा-क्रि.
4. तस्मात्–मु.
5. अत्र अप्राकृतवर्णाश्रमाः इति ज्ञातव्यम् ।
6. धर्म–क्रि.
7. मितनिद्रा मिताहारः मितवाचोऽपि योगिनः–बी. कौ.

जितेन्द्रियो जितद्वन्द्वस्त[1]पोदानदयापरः ।
स्थिरबुद्धिः स्थिरारम्भः शिवपूजादि[2]कर्मवित् ॥ ५६ ॥

सत्यवागूर्जितः प्राज्ञो मेधावी नियतः शुचिः ।
लिङ्गाङ्गस्थलभेदज्ञष्षट्स्थलज्ञानतत्परः ॥ ५७ ॥

वयष्षोडशकादूर्ध्वं सप्ततेरध इष्यते ।
[3]न्यासमुद्राविधानज्ञो ह्यङ्गार्पणतत्त्ववित् ॥ ५८ ॥

शिवसिद्धान्ततत्त्वज्ञः षडध्वज्ञानतत्परः ।
नित्याधिकारकुशलो नैमित्तिकविचक्षणः ॥ ५९ ॥

काम्याधिकारचतुरो दीक्षाकर्म[4]विशारदः ।
मण्डले मण्डपे कुण्डे [5]प्रासादे प्रतिमासु च ॥ ६० ॥

लिङ्गपीठे शिलायां च परीक्षानिपुणोऽग्रणीः ।
निग्रहानुग्रहे दक्षः सर्वदोषविवर्जितः ॥ ६१ ॥

[6]मठस्थलविलीनस्य गुरुपट्टं न चेश्वरि ! ।

[पतिपत्न्यादीनां गुरुद्वयाङ्गीकारे फलम्]

न भवेत्पतिपत्न्योश्च गुरुरन्यो वरानने ॥ ६२ ॥

गुरुद्वयं च [7]लिङ्गं च द्वयमेव भवेत्तदा ।
तथा दीक्षा द्विधा चैव प्रसादश्च द्विधा भवेत् ॥ ६३ ॥

---

1. पशुशीलो–क्रि.
2. कर्मठः–वी., कौ.
3. व्यास–क्रि.
4. कर्मठः–वी., कौ.
5. प्रसादे–क्रि.
6. मण्डलस्थलहीनं स्यात्–क्रि.
7. लिङ्गस्य–क्रि.

यथा द्वयमिदं देवि! विशेषं पातकं भवेत् ।
पतिपत्नीभ्रातृपुत्रदासीदासानुवर्तिनाम् ॥ ६४ ॥

एकदीक्षा भवेद्देवि! विशेषाद्भक्तिवर्धिनी ।
गुरुलक्षणमित्युक्तं

[शिष्यलक्षणवर्णनं तस्य परीक्षादिकं च]

शिष्यलक्षणमुच्यते ॥ ६५ ॥

द्विजातिर्वा [1] तथा शूद्रः स्वस्वोक्ताचारवञ्च्छुचिः ।
सत्यवाग्गुरुभक्तश्च दम्भाहंकारवर्जितः ॥ ६६ ॥

रागद्वेषविनिर्मुक्तः शान्तः सर्वजनप्रियः ।
अहिंसको दया[2]युक्तो नित्यमुद्युक्तमानसः ॥ ६७ ॥

गुरुशुश्रूषणरतो मनोवाक्कायकर्मभिः ।
बहिरन्तश्चरैः प्राणैः गुरुभक्तियुतो नरः ॥ ६८ ॥

गुरुणाऽपि स्वयं शिष्यो वर्षमेकं [3] परीक्षितः ।
गुर्वाज्ञा[4]पालकः सौम्यः शिष्य इत्यभिधीयते ॥ ६९ ॥

[5] परीक्ष्य परितः शिष्यमुत्तमं नीचकार्यतः ।
नीचं चोत्तमकार्येण ततो दीक्षां समाचरेत् ॥ ७० ॥

एवं सङ्क्षेपतः प्रोक्तं लक्षणं गुरुशिष्ययोः ।

[धारणार्हलिङ्गलक्षणम्]

धारणार्हस्य लिङ्गस्य लक्षणं त्वथ कथ्यते ॥ ७१ ॥

---

1. अन्यजातिर्वा–क्रि.
2. शीलो–क्रि.
3. विचारितः–क्रि.
4. चकितः–ग.
5. परीक्षपलि–ग.

[शिलाभेदाः तन्नामानि च]

स्फाटिकं शैलजं वापि चन्द्रकान्तमयं तु वा ।
पाषाणं सूर्यकान्तं वा लिङ्गमेकं समाहरेत् ॥ ७२ ॥

नादेयं शैलसंभूतं पुण्यक्षेत्रसमुद्भवम् ।
गङ्गोद्भवं सागरजं लिङ्गं तन्मम संमतम् ॥ ७३ ॥

[काम्यलिङ्गानि]

यद्देवि! शिवनाभाख्यं लिङ्गं तदहमेव हि ।
काम्यान्यन्यानि लिङ्गानि तत्तदिष्टार्थदानि हि ॥ ७४ ॥

[श्रीशैलजस्य सर्वोत्तमत्वकथनम्]

श्रीशैलजं महादेवि! ऐहिकामुष्मिकप्रदम् ।
सर्वोत्तमोत्तमं लिङ्गं सर्वाभीष्टा[1]र्थदायकम् ॥ ७५ ॥

यद्दत्तं गुरुणा देवि! लिङ्गं तदहमेव हि ।

[ब्राह्मणादिवर्णैः धार्यमाणलिङ्गानि]

श्वेतं रक्तं तथा पीतं कृष्णं चेति चतुर्विधम् ॥ ७६ ॥

विप्रादीनां तु वर्णानां लिङ्गं धार्यं यथाक्रमम् ।

[लिङ्गमानम्]

लिङ्गवृत्तसमं पीठं दैर्घ्यं विस्तार एव च ॥ ७७ ॥

तदर्धं गोमुखं चैव प्रोक्तं लिङ्गस्य लक्षणम् ।
सपीठस्य च लिङ्गस्य लक्षणं तु तदुच्यते ॥ ७८ ॥

एकादित्र्यन्तमङ्गुल्याः चरलिङ्गं सदैर्घ्यकम् ।
लिङ्गस्य सदृशं पीठं पीठार्धं गोमुखं भवेत् ॥ ७९ ॥

---

1. फलप्रदम्–क्रि.

लिङ्गदैर्घ्यं चतुर्भागं द्विभागं शक्तिसंयुतम् ।
द्विभागं च चतुर्भागमेकभागं च बन्धनम् ॥ ८० ॥

अङ्गुलं तु त्रिधा भज्य तन्मानं वा समाचरेत् ।
लिङ्गमस्तकविस्तारे लिङ्गोच्छ्रायसमन्वितम् ॥ ८१ ॥

वेदभागवशान्मानं विस्तारं मस्तकस्य तु ।
त्रिभागं परिणाहस्य तद्वत्पीठे च विस्तृतिः ॥ ८२ ॥

एकं नाहं त्रिधा भज्य भागेनैकेन हीनकम् ।

[लिङ्गस्य न्यूनाधिकसाम्येषु फलभेदः]

[1] नाहमेकं प्रकर्तव्यं द्विहीनं वा समाचरेत् ॥ ८३ ॥

लिङ्गाधिक्ये भवेन्मृत्युः शक्त्याधिक्ये धनक्षयः ।
लिङ्गशक्त्योस्समत्वं हि भोगमोक्षफलप्रदम् ॥ ८४ ॥

[लिङ्गदार्ढ्याय अष्टबन्धः]

लाक्षा सर्जरसः सिक्थं कुरुविन्दं च गुग्गुलम् ।
गैरिकं गुडतैले च अष्टबन्धमिति स्मृतम् ॥ ८५ ॥

अनेन च दृढीकुर्याल्लिङ्गं पीठे सुसंस्थितम् ।

[शिष्यकर्तव्यकर्माणि]

आदिष्टो गुरुणा शिष्यः प्रभाते पुण्यवासरे ॥ ८६ ॥

विधायमङ्गलस्नानं धौतवस्त्रपरिच्छदः ।
ललाटादिक्रमेणैव कुर्यात् त्रैपुण्ड्रकं मुदा ॥ ८७ ॥

शिवक्षेत्रे शिवारामसमीपे वा शुभे गृहे ।
शिवालयसमीपे वा देशिकस्य गृहेऽपि वा ॥ ८८ ॥

---

1. एकहीनं–मु.

उपेत्या[1]चार्यपादाब्जे प्रणम्य तदनन्तरम् ।
पूजयेत्स्वर्णपुष्पाद्यैः भक्त्या [2]शक्त्यनुसारतः ॥ ८९ ॥

[3]स्नातानलङ्कृतान् शुद्धवाससो ऋत्विजस्ततः ।
पुष्पाक्षतविभूत्याद्यैः चतुरस्तान् प्रपूजयेत् ॥ ९० ॥

एको भवेदिहाचार्यः शिवभक्तिपरायणः ।
चत्वारो ऋत्विजस्तत्र शिवाचार्यस्य संमताः ॥ ९१ ॥

[दीक्षाकर्माङ्गभूतकलशस्थापनं तत्र पूर्वदिक्कलशाधीशाः]

[4]रेणुको रेवणो रुद्रो मुनिर्नीलो महेश्वरः ।
घण्टासिद्धश्च सारङ्गो वृद्धोऽगस्त्यो गुरु[5]र्गुरुः ॥ ९२ ॥

त्रिशिखोऽष्टजटाः [6]पञ्चवर्णिकस्सिद्धशासनः ।
इत्यादयो महाभागा महापुरुषसंभवाः ॥ ९३ ॥

पूर्वदिक्कलशाधीशाः शुद्धयज्ञोपवीतिनः ।
मृत्कन्था बिल्वदण्डाश्च षट्त्रिंशज्जटिलाःपराः ॥ ९४ ॥

गुरुधर्मभिक्षां देहि मुद्राशब्दविराजिताः ।
द्वादशानां सहस्राणां जङ्गमानामधीश्वराः ॥ ९५ ॥

शैवपञ्चाक्षरासक्ता गृहस्थाश्रमपालकाः ।
घनलिङ्गमहान्तोऽपि निग्रहानुग्रहाशयाः ॥ ९६ ॥

---

1. गुरु-क्रि.
2. वित्ता-ग., वे.
3. सर्वा-मु.
4. रेवकः-मु.
5. मतः-मु.
6. पञ्चवल्लीकोपि दशाननः-वी., कौ.

कृतप्रभृतितिष्यान्तं प्लावयिष्यन्ति भूतलम् ।

[दक्षिणदिक्कलशाधीशाः]

दारुको मरुलाचार्यश्चालवाण्डो महातपाः ॥ ९७ ॥

ज्योतिर्मरिगुरुश्चिक्को व्याघ्रकन्थो बृहद्रुदः ।
नारकन्थः पत्स्यकन्थो मुक्ताकन्थो महामुनिः ॥ ९८ ॥

एकादशशिखायोगी मल्लिकार्जुननामवान् ।
एतत्प्रभृतयोऽघोरविग्रहा मम शाङ्करि ! ॥ ९९ ॥

अथर्वाध्ययनोपेता याम्यदिक्कलशाधिपाः ।
षट्सहस्रचराणां च गुरवोऽ[1]तीतमूर्तयः ॥ १०० ॥

वानप्रस्थाश्रमाध्यक्षा हंसपञ्चाक्षरीजपाः ।
एकादशशिखाव्याघ्रकन्थौदुम्बरदण्डकाः ॥ १०१ ॥

सन्तो दयाधर्मभिक्षां देहि मुद्राविराजिताः ।
त्रेतादितिष्यपर्यन्तं प्लावयिष्यन्ति भूतलम् ॥ १०२ ॥

[पश्चिमदिक्कलशाधीशाः]

घण्टाकर्णस्त[2]थाचैकोरामो मुण्डी [3] महेश्वरः ।
सुतारस्तारको मुक्तो नूपुरश्च पुराणिकः [4] ॥ १०३ ॥

सिद्धबुद्धः सिद्धवीरो जालन्ध्राभिधकन्थकः ।
काचकन्थोऽप्ययःकन्थः कूर्पासाभिधकन्थकः ॥ १०४ ॥

---

1. धीति–मु.
2. थैकश्च–ग.
3. गुहेश्वरः–ग.
4. छन्दोभङ्गभिया पुराणिकः इति प्रयोगः ।

एतत्प्रभृतयस्सद्योजातरूपा निरामयाः ।
लिङ्गार्पिताभिधां भिक्षां देहि [1]मुद्राविराजिताः ॥ १०५ ॥

ऋग्वेदाढ्या एकशिखा प्रणवाभ्यासतत्पराः ।
कू[का]र्पासकन्थका वेणुदण्डाः पश्चिमकुण्डपाः ॥ १०६ ॥

त्रयाणां च सहस्राणां जङ्गमानामधीश्वराः ।
विरक्ताश्रमरक्ताश्च विरक्ताः परमर्षयः ॥ १०७ ॥

आद्वापराच्च तिष्यान्तं प्लावयिष्यन्ति भूतलम् ।

[उत्तरदिक्कलशाधीशाः]

गजकर्णो त्रिरङ्गुष्ठो [2]माचणः सङ्कणोऽव्ययः ॥ १०८ ॥

कल्याणपण्डितः केशी माधवः श्रीपतिः प्रभुः ।
[3]मल्लिकार्जुन इत्याद्या ब्रह्मचर्याश्रमान्विताः ॥ १०९ ॥

गायत्रीजापका वामदेव्या शुद्धोपवीतिनः ।
सुवर्णकन्थाः पञ्चशिखा जङ्गमा नैक[4]पालकाः ॥ ११० ॥

पालाशदण्डा भवतिभिक्षां देहीति मुद्रिकाः ।
उदकलशनेतारः प्लावयिष्यन्ति तिष्यजान् ॥ १११ ॥

विभूतिं शिवभक्तेभ्यः सर्वेभ्यस्तदनन्तरम् ।
वृद्धानुक्रमतो दत्वा पुष्पाद्यैस्सम्यगर्चयेत् ॥ ११२ ॥

अथ तेभ्यस्समस्तेभ्यो देशिकेन्द्रपुरस्सरम् ।
यथा प्रदक्षिणं कृत्वा ताम्बूलादि समर्पयेत् ॥ ११३ ॥

---

1. मुद्राङ्किताः पराः–वी., कौ.
2. मञ्चमसङ्गमो–मु.
3. यजुरध्ययनोपेताः–वी., कौ.
4. पण्डिताः–मु.

[उपदेशकालः]

शुभे काले शुभे मासे तिथौ शुद्धे शुभेऽहनि ।
शुभप्रदे च नक्षत्रे [1] गृह्णीयादुपदेशकम् ॥ ११४ ॥

[मन्त्रोपदेशे त्याज्याः ग्राह्याश्च मासाः]

मन्त्रारम्भस्तु चैत्रे च बहुदुःखफलप्रदः ।
वैशाखे रत्नलाभश्च ज्येष्ठे च मरणं ध्रुवम् ॥ ११५ ॥

आषाढे बन्धुनाशश्च पूर्णायुः श्रावणे भवेत् ।
प्रजानाशो भाद्रपदे सर्वतः शुभमाश्विने ॥ ११६ ॥

कार्तिके मन्त्रसिद्धिश्च मार्गशीर्षे शुभावहः ।
पुष्ये तु मन्त्रहानिः स्यान्माघे मेधाविवर्धनम् ॥ ११७ ॥

फाल्गुने सर्वसिद्धिः स्यादिति मन्त्रविदो विदुः ।

[मन्त्रोपदेशे पक्षभेदः, कृष्णे विशेषश्च]

शुक्लपक्षे शुभा दीक्षा कृष्णे चापञ्चमी [2] तिथिः ॥ ११८ ॥

[मन्त्रोपदेशे पक्षद्वये फलभेदः]

कृष्णपक्षे बुभुक्षूणां मुमुक्षूणां [3] सितेतरे ।

[मन्त्रोपदेशे वर्ज्याः ग्राह्याश्च तिथयः]

चतुर्थीं नवमीं षष्ठीमष्टमीं च चतुर्दशीम् ॥ ११९ ॥

पौर्णमासीं विना शेषा हितास्स्युः सिद्धयो यतः ।

[मन्त्रोपदेशे वर्ज्याग्राह्याश्च वाराः]

रविमङ्गल [4] मन्दाश्च त्याज्यास्त्वन्ये शुभावहाः ॥ १२० ॥

---

1. उपदेशं च कारयेत्–ग.
2. दिनम्–ग.
3. वलक्षके–मु.
4. सौराश्च–ग.

[मन्त्रोपदेशे ग्राह्यनक्षत्राणि]

रोहिणीमृगशीर्षं च मघापुष्यपुनर्वसू ।
हस्तस्वात्यनूराधा श्रवणं रेवती तथा ॥ १२१ ॥

त्रीण्युत्तराणि मूलं च नक्षत्राणि चतुर्दश[1] ।

[मन्त्रोपदेशे त्याज्याः योगाः]

व्याघातं परिघं वज्रं व्यतीपातं च वैधृतम् ॥ १२२ ॥

गण्डातिगण्डशूलानि विष्कंभं नव वर्जयेत् ।

[मन्त्रोपदेशे करणानि]

बालादिवणिजान्तानि शुभानि करणानि षट् ॥ १२३ ॥

[मन्त्रोपदेशे लग्नादिविचारः]

वृषभो वाऽथ कुम्भो वा वृश्चिकस्सिंह एव वा ।
मिथुनं वाऽपि कन्या वा धनुर्वा मीन एव वा ॥ १२४ ॥

एते हि राशयः प्रोक्ताश्चरराशिं च वर्जयेत् ।
गुरूदयं वा कुर्वीत शुक्रोदयमथापि वा ॥ १२५ ॥

बुधोदयं वा कुर्वीत त्यजेत्पातेन संयुतम् ।
अष्टमस्था ग्रहास्सर्वे नेवैष्टा द्वादशस्थिताः ॥ १२६ ॥

एवं विचार्य सर्वं च ततो दीक्षां समाचरेत् ।

इति शिवतत्त्वरत्नाकरे नवमकल्लोले दीक्षाभेदगुरु-
शिष्यऋत्विक्कालदेशादिनिरूपणं नाम
सप्तमस्तरङ्गः

—o—

---

1. 'शुभान्येतानि दीक्षायां' इति वीरशैवाचारकौस्तुभानुरोधेन चतुर्दश ग्राह्यनक्षत्राणीति अवगन्तव्यम् ।

## नवमकल्लोले अष्टमस्तरङ्गः

—o—

[प्रागुक्तदीक्षादिस्मरणपूर्वकं दीक्षामण्टपलक्षणकथनप्रतिज्ञा]

दीक्षाभेदो लक्षणं च गुरोश्शिष्यस्य चैव हि ।
ऋत्विजां देशकालानां क्रमेण प्राक् प्रदर्शितम् ॥ १ ॥

अधुना मण्टपादीनां लक्षणानि प्रचक्ष्महे ।
तत्रादौ कथ्यते सम्यग्दीक्षामण्टपलक्षणम् ॥ २ ॥

[दीक्षामण्टपरचने भूमिखननं तत्र उत्तममध्यमाधमप्रमाणं च]

हस्तमात्रं खनेद्भूमिं पूरयेत्ते[1]न पांसुना ।
अधिका चेदु[2]त्तमा स्यान्मध्यमा समपांसुना ॥ ३ ॥

अधमा हीनपांसुःस्यादधमामिह वर्जयेत् ।

[स्थलशुद्धिः]

भस्माङ्गारतुषान् केशांस्तस्यामुद्धारयेत्ततः ॥ ४ ॥

पञ्चगव्येन सम्प्रोक्ष्य शिवमन्त्रेण दीक्षितः ।
पञ्चरत्नं क्षिपेत्तत्र भूशुद्धिं च प्रकल्पयेत् ॥ ५ ॥

[पुण्याहवाचनम्]

ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते ।
पुण्याहं वाचयित्वाऽथ मण्टपं रचयेच्छुभम् ॥ ६ ॥

---

1. तत्र–मु.
2. त्तर–मु.

[मण्टपनिर्माणे स्तम्भभेदः, तेषां संख्या मानानि च]

कनिष्ठं चाष्टहस्तं तु नवहस्तं तु मध्यमम् ।
दशैकादश हस्तं वा द्वादशं चोत्तमोत्तमम् ॥ ७ ॥

खदिरः क्रमुकश्चैव शाखावेणुस्तथैव च ।
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा ॥ ८ ॥

षोडशस्तम्भसंयुक्ते चत्वारस्तेषु मध्यगाः ।
अष्टहस्तसमुच्छ्रायं स्थापयेत्द्वादशाभितः ॥ ९ ॥

पञ्चहस्तप्रमाणान्वा निश्छिद्रांश्च ऋजून् शुभान् ।
तत्पञ्चमांशं निखनेन्मेदिन्यां तन्त्रवित्तमः ॥ १० ॥

[दीक्षामण्टपालङ्कारः]

नारिकेल[1]दलैर्वंशैः छादयेत्कायमानकम् ।
द्वारेषु तोरणानि स्युः क्रमात्क्षीरमहीरुहः ॥ ११ ॥

[2] स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तः पृथक्पृथक् ।
दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः ॥ १२ ॥

तिर्यक्फलकमानं स्यात्स्तम्भानामर्धमानतः ।
शूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः ॥ १३ ॥

दिक्षुध्वजान्निबध्नीयाल्लोकपाल[3]समन्वितान् ।
वितानैश्चोर्ध्वमाच्छाद्य घण्टाचामरभूस्थितम् ॥ १४ ॥

---

1. पूगवंशैः–ग., म.
2. देव्यु–ग., म.
3. समप्रभान्–ग. मु.

दर्भ[1]रज्जुपरिक्षिप्तं पुष्पमालावलम्बितम् ।
फलपल्लवगन्धाढ्यं धूपदीपसमन्वितम् ॥ १५ ॥

चतुरश्रं चतुर्द्वारं चतुस्तोरणभूषितम् ।
दर्भमालासमायुक्तं दिग्गजैरुपशोभितम् ॥ १६ ॥

उक्तैरन्यैश्च शोभाढ्यैरलङ्कुर्वीत मण्टपम् ।

[वेदीविधानं तासां प्रकाराश्च]

तन्मध्यमण्टपे क्षेत्रेऽरत्निमात्रसमुन्नताम् ॥ १७ ॥

चतुरश्रां प्रचाराख्यायामां वेदिं प्रकल्पयेत् ।
वेदिः चतुर्विधा तत्र चतुरश्रा च पद्मिनी[2] ॥ १८ ॥

कृत्वा तु स्थण्डिलं तत्र पद्ममष्टदलं लिखेत् ।

[पञ्चकलशस्थापनम्]

पञ्च स्वर्णादिकलशानाचार्यः स्थापयेन्नवान् ॥ १९ ॥

[कलशपात्रलक्षणम्]

मृण्मयान् वाऽपि कलशान् पक्व[3]बिल्वफलोपमान् ।
अच्छिद्रान् परमन्तस्स्थपाषाणस्फोटवर्जितान् ॥ २० ॥

---

1. माला–ग.
2. इतः परं वेदान्तसारवीरशैवचिन्तामणौ उत्तरखण्डे अयमधिको भागः वर्तते :—
   श्रीधरा सर्वतो भद्रा दीक्षासु स्थापनादिषु ।
   चतुरश्रा चतुष्कोणा वेदी सर्वफलप्रदा ॥
   दर्पणोदरसङ्काशा निम्नोन्नतविवर्जिता ।
   मध्ये तस्या वेदिकायाः सुस्निग्धैस्तण्डुलैः सितैः ॥
3. बिम्ब-मु. वे.

अग्निना च समं तस्मान् कालमण्डलवर्जितान् ।
चतस्रो वीक्षणाद्याश्च कर्तव्याः शुद्धयः क्रमात् ॥ २१ ॥

[कलशस्थापने ईशानादिदिक्सूचनम्]

एवं मध्ये चतुः कोणे चतुरस्तान्निधापयेत् ।
ईशानं कर्णिकामध्ये पुरुषं पूर्वतोमुखम् ॥ २२ ॥

अघोरं दक्षिणे देशे वामदेवं तथोत्तरे ।
सद्यं पश्चिमदिग्देशे विन्यसेत्कलशान् गुरुः ॥ २३ ॥

[बीजाक्षराणि]

ह्रां ह्रीं ह्रूं च ततो ह्रैं ह्रौं बीजैरोङ्कारपूर्वकैः ।
[1] ईशानादि नमोऽन्तैस्तु प्रोक्षयेत्कलशान्क्रमात् ॥ २४ ॥

प्रत्येकं नववस्त्रेण वेष्टयेद्देशिकोत्तमः ।

[तन्तुवेष्टनम्]

[2] तन्तुभिस्तनुभिः शुद्धैः पञ्च तान् [3] परिवेष्टयेत् ॥ २५ ॥

[कलशेषु समन्त्रकं जलपूरणम्]

गङ्गादिसर्वतीर्थानां अम्भांसि परमो गुरुः ।
संपूर्य पञ्चकलशानिमम्मे इति मन्त्रतः ॥ २६ ॥

[आम्रपत्रादिभिः कलशालङ्कारः]

तेषु तीर्थाम्बुपूर्णेषु निदध्यादाम्रपल्लवान् ।
दूर्वाङ्कुरान् सपूगानि नागवल्लीदलान्यपि ॥ २७ ॥

---

1. ओं ह्रां सद्योजाताय नमः ओं ह्रीं वामदेवाय नमः ओं ह्रूं अघोराय नमः ओं ह्रैं तत्पुरुषाय नमः ओं ह्रौं ईशानाय नमः । इति ईशानादिमन्त्राः ।
2. नव–ग.
3. कलशान् गुरुः–ग.

तेषु स्वर्णानि रत्नानि [1] क्षिप्त्वा सम्यक् प्रपूजयेत् ।

[तत्र शान्त्यादिकलायोजनम्]

कलशे शान्त्यतीताख्या शान्तिः पूर्वेऽथ दक्षिणे ॥ २८ ॥

विद्या सौम्ये प्रतिष्ठा स्यान्निवृत्तिः पश्चिमे क्रमात् ।
शान्त्यतीतादिभिर्मन्त्रैः कलशान् पञ्च तान् गुरुः ॥ २९ ॥

[कलशपूजादिकम्]

तत्तत्क्रियोचितै[2]र्द्रव्यैः पूजयेद्यतमानसः ।
अथ तत्कलशस्थानामम्भसामभिमन्त्रणम् ॥ ३० ॥

श्रीमत्पञ्चाक्षरीमन्त्रेणाचार्यः प्रतिपादयेत् ।

[कलाः पञ्च]

ईशानस्य कलाः पञ्च मन्त्रमुच्चारयेद्गुरुः ॥ ३१ ॥

आचार्यो मध्यमस्यार्चां कुर्यात्पुष्पाक्षतादिभिः ।
ऋत्विजः प्रीतमनसो विदध्युरितरार्चनम् ॥ ३२ ॥

तस्मादीशानदिग्भागे स्थण्डिलं तु [3] समाचरेत् ।

[लिङ्गस्य जलाधिवासक्रमः]

एकैकरात्रं कुम्भेषु त्रिषु पूर्णेषु वारिणा ॥ ३३ ॥

तत्राधिवासयेल्लिङ्गमेकैकं याममेव वा ।

[लिङ्गस्य वस्त्राधिवासः]

नवहस्तप्रमाणेन वस्त्रं कुर्याद्विचक्षणः ॥ ३४ ॥

---

1. निक्षिप्य सम्यगर्चयेत्–ग.
2. मन्त्रैः वी. कौ.
3. प्रकल्पयेत्–मु.

तत्रैव नवधान्यैश्च स्थण्डिलानि समाचरेत् ।
पञ्चाढकप्रमाणेन स्थण्डिलानि पृथक् पृथक् ॥ ३५ ॥

[लिङ्गस्य धान्याधिवासक्रमः]

श्यामकश्च प्रियङ्गुश्च गोधूमव्रीहिमुद्गकाः ।
निष्पावमाषचणकतिलाश्चैव क्रमेण तु ॥ ३६ ॥

उपर्युपरि संस्थाप्य तद्वस्त्रोपरि विन्यसेत् ।
पद्ममष्टदलं लेख्यं मध्ये कर्णिकया सह ॥ ३७ ॥

धान्योपरि न्यसेल्लिङ्गं यामं धान्याधिवासनम् ।
नववस्त्रेण संवेष्ट्य गन्धपुष्पाक्षतादिभिः ॥ ३८ ॥

नैवेद्यं दापयेत्पश्चात्ताम्बूलं दापयेत्ततः ।

[गुरुणा शिष्यनिरीक्षणं मन्त्रद्वारा अङ्गशुद्धीकरणं च]

अर्चनानन्तरं शिष्यं कृपया वीक्ष्य देशिकः ॥ ३९ ॥

तस्य दक्षिणादिग्भागे स्वस्तिकं तत्र कारयेत् ।
तन्मध्ये स्थापयेच्छिष्यमुत्तराभिमुखं गुरुः ॥ ४० ॥

स्वयं च प्राङ्मुखो भूत्वा शिवैकाहितमानसः ।
एवं शिष्यं समारोप्य स्वस्तिकं [1] तत्र कारयेत् ॥ ४१ ॥

भूतादिकेशपर्यन्तं शुद्धिं तस्य समाचरेत् ।
पृथिवीति च मन्त्रेण पञ्चभूतविशोधनम् ॥ ४२ ॥

---

1. शुद्धमानसम्–ग. वे.

वाङ्मनश्चेति मन्त्रेण पञ्चेन्द्रियविशोधनम् ।[1]
अन्तःकरणशुद्धिः स्यान्मन इत्यभिमन्त्रणात् ॥ ४३ ॥

त्वगित्यनेन मन्त्रेण धातुशुद्धिं समाचरेत् ।
अन्नेति मनुना कोशपञ्चकृत्य विशोधनम् ॥ ४४ ॥

प्राणापनेति मन्त्रेण पञ्चप्राणान्विशोधयेत् ।

[कलशोदकेन त्रिवारं शिष्याभिषेचनम्]

अभिषेकं ततः कुर्यात्कलशान्तस्थवारिणा ॥ ४५ ॥

अभिषिञ्चेत्स्वयं प्राज्ञश्चोद्धृत्य कलशान् गुरुः ।
हृदयादिषु चाङ्गेषु हरस्याङ्गैर्यथाक्रमम्[2] ॥ ४६ ॥

प्रोक्षयेदथ ऋत्विग्भिः सदूर्वाङ्कुरपल्लवैः ।
केचिदुद्धृत्य कलशानभिषिञ्चन्ति देशिकाः ॥ ४७ ॥

उद्धृत्य वा ततः कुर्यात्प्रोक्षणं शिष्यमूर्धनि ।
संप्रोक्ष्य पञ्चकलशान् सदूर्वाङ्कुरपल्लवान् ॥ ४८ ॥

स्वस्वस्थानेषु कलशान् सन्निधाय[3] यथापुरा ।
उद्धृत्य च यथापूर्वं कुर्वीत प्रोक्षणं[4] पुनः ॥ ४९ ॥

---

1. 'शिरःपाणीति मन्त्रेण कर्मेन्द्रियविशोधनम्' इति वेदान्तसारवीरशैव-चिन्तामण्यनुरोधेन कर्मेन्द्रियाणीति अवगन्तव्यम् ।
2. ॐ हां हृदयायनमः । ॐ हीं शिरसे स्वाहा । ॐ हूं शिखायै वषट् । ॐ हैं कवचाय हुं । हौं नेत्रत्रयाय वौषट् । ॐ हः अस्त्राय फट् एते शिवषडङ्गमन्त्राः ।
3. प्रयत्नतः–ग. वे.
4. बुधः–मु.

स्थापयित्वा पुनस्तांस्तान् कलशान् स्वस्वभूमिषु ।
उद्धृत्य पूर्ववत्कुर्यात्प्रोक्षणं शिष्यमूर्धनि ॥ ५० ॥

इत्थं त्रिवारमाचार्यः कृत्वा तस्याघमर्षणम् ।
[शिष्याङ्गेषु अष्टात्रिंशत्कलायोजनम्]
अङ्गवक्त्रकला भेदात् पञ्चब्रह्माणि विन्यसेत् ॥ ५१ ॥

शिरोवदनहृद्गुह्यपादेष्वेतानि कल्पयेत् ।
ईशानस्य कलाः पञ्च पञ्चस्वेतेषु च क्रमात् ॥ ५२ ॥

ततश्चतुर्षु वक्त्रेषु पुरुषस्य कला अपि ।
चतस्रः प्रणिधातव्याः पूर्वादिक्रमयोगतः ॥ ५३ ॥

हृत्कण्ठदेशे [ठांसेषु]नाभौ च कुक्षौ पृष्ठे च वक्षसि ।
अघोरस्य कलाचाष्टौ योजनीया यथाक्रमम् ॥ ५४ ॥

पश्चात्त्रयोदशकलाः पायुमेढ्रोरुजानुषु ।
जङ्घास्फिक्कटिपार्श्वेषु वामदेवस्य भावयेत् ॥ ५५ ॥

सद्यस्य च कला अष्टौ पादयोरपि हस्तयोः ।
[1]घ्राणे शिरसि बाह्वोश्च कल्पयेत्कल्पवित्तमः ॥ ५६ ॥

अष्टत्रिंशत्कलान्यासमेवं कृत्वाऽनुपूर्वशः ।
[वामहस्तसंस्कारः]
आचार्यो दक्षिणे हस्ते साङ्गं संपूज्य शासनम् ॥ ५७ ॥

शिवं ध्यात्वा चिदानन्दं विदध्याच्छिष्यमस्तके ।
सव्यं प्रक्षाल्य हस्तं तु कृत्वा गन्धैरलङ्कृतम् ॥ ५८ ॥

1. घ्राणे—ग.

न्यसेद्ब्रह्मणि शाखासु तासु पञ्चस्वनुक्रमात् ।
गन्धमण्डलकं कृत्वा वामाङ्गुष्ठेन मध्यतः ॥ ५९ ॥

विन्यसेत्तत्र देवेशं [1]योगिराजं परं शिवम् ।
पूजयेदर्घ्यपाद्यैस्तं गन्ध [2]धूपपवित्रकैः ॥ ६० ॥

शिवहस्त इति प्रोक्तः पाशानां नाशने बुधैः ।
शिवतेजोमयं पाणिं शिवमन्त्रमुदीरयन् ॥ ६१ ॥

शिवहस्तं निधायाथ शिष्यस्य सिरसि न्यसेत् ।
ततः शिवासनं ध्यात्वा शिष्यमूर्ध्नि च देशिकः ॥ ६२ ॥

नादबिन्दुयुतं पीठं चिन्तयेन्मनसा गुरुः ।
[गुरुणा चित्कलावाहनं लिङ्गे तत्समुपवेशनं च]
तत्रावाह्य यथान्यायं अर्चयेन्मनसा शिवम् ॥ ६३ ॥

ज्वलत्कालानलाभासा तटित्कोटिसमप्रभा ।
तस्योर्ध्वे च शिखा [3]सूक्ष्मा चिद्रूपा परमा कला ॥ ६४ ॥

यथा कला तथा भावो यथा भावस्तथा मनः ।
यथा मनस्तथा दृष्टिः यथादृष्टिः तथा स्थलम् ॥ ६५ ॥

सा कला परमा सूक्ष्मा तत्त्वानां बोधिनी परा ।
तामाकृष्य यथान्यायं लिङ्गे समुपवेशयेत ॥ ६६ ॥

---

1. विद्या-ग. वे.
2. द्रुम-ग. मु.
3. साक्षाच्चि-वे.

[लिङ्गपूजा तत्प्रसादनं च]

सुपुष्पं सकुशं प्राणिं न्यस्य लिङ्गस्य मस्तके ।
पञ्चवारं जपेन्मन्त्रं मूलेनाष्टोत्तरं शतम् ॥ ६७ ॥

लिङ्गं संस्थाप्य पादाम्बुना प्रक्षाल्य चरणस्य च ।
लिङ्गस्यतु प्रसादं च भोजयित्वा विधानतः ॥ ६८ ॥

पश्चाच्छिष्यकरे दत्वा मूलपञ्चाक्षरीं स्मरन् ।

[लिङ्गधारणस्थलनिर्देशनपूर्वकं सार्वकालिकालिङ्गधारणकथनं च]

उत्तमाङ्गे गले वाऽपि कक्षे वक्षस्थलेऽपि वा ॥ ६९ ॥

तथा हस्ततले वाऽपि [1] शिवलिङ्गं धरेत्सुधीः ।
गच्छन् तिष्ठन् स्वपन् जाग्रन् उन्मिषन्निमिषन्नपि ॥ ७० ॥

शुचिर्वाऽप्यशुचिर्वाऽपि लिङ्गं सर्वत्र धारयेत् ।
प्रार्थयेत्प्राञ्जलिर्देव! नित्यमत्र स्थिरो भव ॥ ७१ ॥

इति विज्ञाप्य तं शम्भुं तेजसा भास्वरं स्मरेत् ।
तल्लिङ्गं स्थाप्य तच्छिष्ये प्राणलिङ्गमिदं तव ॥ ७२ ॥

एवमुक्तः सदा लिङ्गं न कदाचिद्वि[2]योजयेत् ।

[मूलमन्त्रोपदेशः तद्विधानकथनं च]

कर्णे शिष्यस्य शनकैः मूलमन्त्रमुदीरयेत् ॥ ७३ ॥

आचार्यो मूलमन्त्रेण कर्ममायामलापहम् ।
मूलमन्त्रमतिस्पष्टं घण्टानादवि[3]मिश्रितम् ॥ ७४ ॥

---

1. प्राणलिङ्गं बृहत्सुधीः-ग. म.
2. मोच-मु.
3. निश्रुतम्-वे.

नानारत्नप्रतीकाशवर्णराजीविराजितम् ।
चरद्विद्युल्लताकारं द्वादशान्ताद्विनिर्गतम् । ७५ ॥

सानन्दं निर्गतं तस्माच्छिष्यश्रोत्रे समुच्चरेत् ।
मूलमन्त्रं समुच्चार्य [1] त्रिवारं श्रावयेच्छिवम् ॥ ७६ ॥

तन्मन्त्रमहसोत्फुल्लशिष्यलोचनबन्धनम् ।
उन्मुच्य क्षेपयेत्पुष्पं अकामाल्लिङ्गमूर्धनि ॥ ७७ ॥

मन्त्रतेजः प्रपुल्लाक्षो दृष्ट्वा तं प्रणमेच्छिवम् ।

[लिङ्गे प्राणप्रतिष्ठापनम्]

सर्वलक्षणसम्पन्ने तस्मिन् लिङ्गे विशोधिते ॥ ७८ ॥

पीठस्थितेऽभिषिक्ते च गन्धपुष्पादिपूजिते ।
मन्त्रपूते कलां शैवीं योजयेद्विधिना गुरुः ॥ ७९ ॥

शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत् ।
(तल्लिङ्गं तस्य तु प्राणे स्थापयेदेकभावतः ॥ ८० ॥

एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत् )[2] ।

[प्राणलिङ्गधारणानन्तरं शिष्योपदेशः]

प्राणवद्धारणीयं तु प्राणलिङ्गमिदं तव ॥ ८१ ॥

कदाचित्कुत्रचिद्वाऽपि न [3] वियोजय देहतः ।
यदि प्रमादात्पतति लिङ्गं देहान्महीतले ॥ ८२ ॥

---

1. त्रिधा तं वाचयेच्छिवम्–वे.
2. अयं धनुरङ्कितो भागः–मु. कोशे नास्ति ।
3. विमोच–मु.

प्राणान् विमुञ्च सहसा प्राप्तये मोक्षसम्पदः ।
इति सम्बोधितश्शिष्यो गुरुणा शास्त्रवेदिना ॥ ८३ ॥

धारयेच्छाङ्करं लिङ्गं शरीरे प्राणयोगतः ।
लिङ्गस्य धारणं पुण्यं सर्वपापप्रणाशनम् ॥ ८४ ॥

वीरशैवाभिषिक्तानां भक्तानामर्हणास्पदम् ।

[लिङ्गे सदाशिवस्य सन्निहितत्वम्]

गर्भावरणमीशस्य सूच्यते सूक्ष्मरूपतः ॥ ८५ ॥

पञ्च ब्रह्मशिवाङ्गस्य पूजयेत्पूर्वतत्त्वतः ।
एकावरणमेवोक्तं पूजयेद्देशिकस्तथा ॥ ८६ ॥

यदा शिवकलायुक्तं लिङ्गं दद्यान्महागुरुः ।
तदारभ्य शिवस्तत्र तिष्ठत्याह्वानमात्रकम् ॥ ८७ ॥

संस्कारेषु च लिङ्गेषु सदा सन्निहितः शिवः ।
तथाऽऽह्वानं न कर्तव्यं प्रतिपत्तिविरोधतः ॥ ८८ ॥

[प्राणलिङ्गे शिवस्य आह्वानादिनिषेधः]

नाह्वानं न विसर्गं च स्वेष्टलिङ्गे तु कारयेत् ।
लिङ्गनिष्ठापरो नित्यमिति शास्त्रविनिश्चयः ॥ ८९ ॥

यथा विश्वेशनिकटे गङ्गासूतकवर्जिता ।

[शिलिङ्गार्चनक्रमनिरूपणम्]

अथ वक्ष्ये विशेषेण शिवलिङ्गार्चनक्रमम् ॥ ९० ॥

पूजोपचारविधिना षट्त्रिंशद्भेदभेदितम् ।
नमः शब्द उमा साक्षाच्छिवशब्दः शिवः स्वयम् ॥ ९१ ॥

आयशब्दस्तयोर्योगः सोमं तं समुपास्महे ।
शिवो लिङ्गं [2] ममैवाङ्गमनया सहितस्स्वयम् ॥ ९२ ॥

पूजा द्वादशधा प्रोक्ता शिवसिद्धान्ततत्परैः ।
उपचारास्तथा चैव चतुर्विंशविधाः स्मृताः ॥ ९३ ॥

[द्वादशशिवलिङ्गार्चनक्रियाकथनम्]

विभूत्याभ्युक्षणं लिङ्गं करणं स्नपनं तथा ।
अङ्गारतापनं चैव धूपनं बीजनं तथा ॥ ९४ ॥

धूमप्रसारणं चैव ततो गन्धावतंसनम् ।
अक्षतारोपणं चैव पुष्पोपहरण तथा ॥ ९५ ॥

दीपप्रसारणं चैव नैवेद्यस्य समर्पणम् ।
ताम्बूलस्य प्रदानं च वस्त्रप्रावरणं ततः ९६ ॥

एवं द्वादशधा प्रोक्ता शिवलिङ्गार्चनक्रिया ।

[चतुर्विंशत्युपचाराः]

आसनाह्वानमर्घ्यं च पाद्यमाचमनं ततः ॥ ९७ ॥

यज्ञोपवीतमाल्या [3] तु लेपनाभरणानि च ।
छत्रं च चामरं चैव तालवृन्तं च दर्पणम् ॥ ९८ ॥

घण्टाशङ्खं च गीतं च वाद्यं नृत्तं प्रदक्षिणम् ।
नमस्कारास्स्तुतिर्यज्ञो विज्ञप्तिश्च विसर्जनम् ॥ ९९ ॥

---

1. अश–मु.
2. मुखै–ग.
3. तुले–मु.

इत्येवमुपचारास्तु चतुर्विंशतिधा स्मृताः ।
समर्चनोपचाराणां योगे षट्त्रिंशदीरिताः ॥ १०० ॥

षट्त्रिंशत्तत्त्वमय्येषा शैवी स्थितिरिति श्रुतिः ।

[अर्चनोपचारयोगक्रमविवरणम्]

अथार्चनोपचाराणां योगक्रम उदीर्यते ॥ १०१ ॥

तस्मात्स्नानादिभिः शुद्धीकरणं विधिवत्ततः ।
कालाब्जपीठरूपेण तत आवाहनं परम् ॥ १०२ ॥

अनीयाङ्गस्थलिङ्गोपवेशनं तत्र चासने ।
विभूत्याभ्युक्षणं पूर्वं समन्त्रकमतः परम् ॥ १०३ ॥

अर्घ्यादिश्चैव चाचामः ततः स्नपनकर्म च ।
अङ्गोपतापनादीनि दश चोक्तानि पूर्ववत् ॥ १०४ ॥

ततो यज्ञोपवीतादि विज्ञप्त्यन्ता यथा [1] तथा ।
विसर्जनं करस्थस्य लिङ्गस्याङ्गे निवेशनम् ॥ १०५ ॥

एवं लिङ्गार्चनं यस्तु कुरुते भक्तिपूर्वकम् ।
सोपचारविधानेन स शिवार्पणविद्भवेत् ॥ १०६ ॥

अर्चनार्पणयोर्भेदो नात्यन्तमिह विद्यते ।
क्रियाविशेषतो भेदः तयोरीष[2]त्प्रकीर्त्यते ॥ १०७ ॥

अर्चनार्पणसापेक्षा वर्तते द्रव्यशुद्धये ।
अर्पणाद्द्रव्यशुद्धिः स्यात्प्रसादः तदनन्तरम् ॥ १०८ ॥

1. क्रमम्–मु.
2. दृश्यते–मु.

[पञ्चभूतार्पणम्]

विभूत्यभ्युक्षणाल्लिङ्गे पृथिवी परिशुध्यति ।
आपश्चस्तपनाच्चद्वद्वह्निरङ्गोपतापनात् ॥ १०९ ॥

वायुस्तथा शिवोद्दिष्टधूपव्यजनकर्मणा ।
धूपधूमेन चाकाशश्चन्द्रो गन्धा[1]वतंसनात् ॥ ११० ॥

ज्योत्स्ना कर्पूरधूपेन नक्षत्राण्यक्षतैः शुभैः ।
सूर्यः पुष्पोपहारेण घृतदीपेन चातपः ॥ १११ ॥

छायाः पश्चात्पुरस्ताच्च पार्श्वतो दीपचालनात् ।
शीतोष्णादीनि पूर्वोक्ततत्तदंशोद्भवादिभिः ॥ ११२ ॥

आत्मा नैवेद्यरूपेण ताम्बूलं त्रिगुणाव्ययम् ।
[2]वस्त्रप्रावरणादेव विशुध्यन्ति दिशो दश ॥ ११३ ॥

एवमर्पणसापेक्षैरर्चयन् शिवमर्चनैः ।
द्रव्यशुद्धिं परां लब्ध्वा प्रसादसुखमश्नुते ॥ ११४ ॥

[अष्टाङ्गार्चनम्]

शान्तिर्वारिसुखं श्रमस्सुमनसः श्रीकण्ठपिण्डोऽक्षताः
ज्ञानं केसरमात्मनैव कुसुमं धूपोऽभवत्सौरभम् ।
दीपं कान्तिरथार्चनारतिरथो नैवेद्यरूपं ततः
ताम्बूलं निजभक्तिरागरस इत्यङ्गाष्टधा पूजनम् ॥ ११५ ॥

---

1. नुलेपनम्–मु.
2. भस्म–मु.

[षट्स्थलात्मकवीरशैवार्चनक्रमः वीरशैवपदनिर्वचनं च]

अतः परं क्रमेणैव वीरशैवार्चनक्रमम् ।
षट्स्थलात्मकरूपेण प्रवक्ष्यामि समासतः ॥ ११६ ॥

भक्तस्थले सुखासीनो भूतिरुद्राक्षधारणम् ।
कृत्वा भक्त्या सु भूतात्मा ततो माहेश्वरस्थले ॥ ११७ ॥

षडक्षरं परं मन्त्रमनुष्ठेयात्मनिष्ठया ।
प्रसादिस्थलमादाय लिङ्गहस्तेऽवधानतः ॥ ११८ ॥

प्राणलिङ्गस्थले पूजां विधाय स्वानुभूतितः ।
ततः शिवार्पणं कृत्वा स्वानन्दाच्छरणस्थले ॥ ११९ ॥

ऐक्यस्थले प्रसादोपभोगतृप्तिमवाप्य च ।
एवं समरसाद्भावात्षडङ्गस्थलयोगतः ॥ १२० ॥

क्रियते सर्वदा सोऽयं वीरशैवार्चनक्रमः ।
विशब्दोऽत्र विकल्पार्थो रशब्दो रहितार्थकः ॥ १२१ ॥

विकल्परहितं [1] शैवं वीरशैवमिति स्मृतम् ।
एकमेवाद्वितीयं यदविकल्पं परं पदम् ॥ १२२ ॥

तद्वीरशैवमित्युक्तं नैतत्सत्वविकल्पकम् ।
एवं समासतः प्रोक्तः शिवलिङ्गार्चनक्रमः ॥ १२३ ॥

---

1. सर्वं–मु., ग.

[1]भूतिस्ते परमप्रकाश उत रुद्राक्षं द्वितीयं मुखं
श्रीपञ्चाक्षरमन्त्र एव भवदीयं भव्यनाम स्फुटम् ।
लिङ्गं मूर्तिरुमापते! तव परानन्दामृतं [2]पारदं
प्रश्नन्यस्त्वदभूत्प्रसाद इति भक्तिस्त्वां भजत्यस्ति मे ॥ १२४ ॥

मानसवचिककायिककर्माण्येधांसि पापपुण्यानि ।
शैवानि हवींषि [3]मया ज्ञानाग्नौ हूयते [4]सदा होमः ॥ १२५ ॥

नित्यं समर्पणकलानिपुणं प्रसन्नं
यद्भक्तिरूपममलं निजभावसिद्धम् ।
निर्लेपभोगरसिकं निरहंममत्वं
तत्कर्म शैवमुभयातिगमाहुरार्याः ॥ १२६ ॥

अधस्ताच्चोर्ध्वतः कृत्वा पुण्यपापेन्धनद्वयम् ।
निर्मन्थेदथचिद्वह्निः पुनस्तैरेव निर्दहेत् ॥ १२७ ॥

एवं समासतः प्रोक्तः शिवलिङ्गार्चनक्रमः ।
शिवानुभवसूत्रेऽस्मिन् शिवसिद्धान्तशासने ॥ १२८ ॥

इति शिवतत्त्वरत्नाकरे नवमकल्लोले दीक्षाविधानमण्टपलक्षणादि-
निरूपणं नाम अष्टमस्तरङ्गः

—o—

1. भूतन्ते-मु.
2. पादुदं-ग.
3. मम-मु.
4. मया-मु.

शिवतत्त्वरत्नाकरः

## नवमकल्लोले नवमस्तरङ्गः

—o—

[प्रागुक्तलिङ्गपूजादिस्मरणपूर्वकं षट्स्थलविवरणम्]

वीरशैवे लिङ्गपूजाविधानमुपवर्णितम् ।
श्रुत्वाऽस्म्यहं कृती श्रोतुं षट्स्थलान्यस्ति मे स्पृहा ॥ १ ॥

कानि तानि स्थलानि स्युः षट्संख्याकानि हे गुरो! ।
तेषां भेदं स्वरूपं च स्वामिन्! मह्यं निरूपय ॥ २ ॥

तत्ते कुमार! वक्ष्यामि यत्पृष्टं साम्प्रतं त्वया ।
संवादः शिवपार्वत्योरस्मिन्नर्थेऽवतिष्ठते ॥ ३ ॥

देवी :—

भगवन्! [1]सर्वलोकेश! करुणाकर! शङ्कर! ।
शैवभेदस्वरूपं च वीरशैवं विशेषतः ॥ ४ ॥

तदाचारस्वरूपं च श्रुतं त्वत्कृपया विभो ।
तत्र लिङ्गाङ्गसंबन्धज्ञानं मोक्षैकसाधनम् ॥ ५ ॥

इत्युक्तं भवता सम्य[2]क्तदृज्ञानमुपदिश्यताम् ।

शिवः :—

यत्पृष्टं हि त्वया देवि! रहस्यमिदमुत्तमम् ॥ ६ ॥

---

1. देवदेवेश–क्रि.
2. कथं ज्ञा–क्रि.

षट्स्थलात्मकमेतच्च श्रूयतां सावधानतः ।

[षड्लिङ्गनामानि]

प्रथमं गुरुलिङ्गं स्यात्तत आचारलिङ्गकम् ॥ ७ ॥

ततः प्रसादलिङ्गं स्याच्चरलिङ्गमतः परम् ।
शिवलिङ्गमतो ज्ञेयं महालिङ्गमतः परम् ॥ ८ ॥

एवं षड्विधलिङ्गानां स्वरूपं शृणु शाङ्करि ! ।

[गुरुलिङ्गत्रैविध्यम्]

दीक्षा शिक्षाऽनुभावश्च गुरुलिङ्गं त्रिधा भवेत् ॥ ९ ॥

[दीक्षास्वरूपं दीक्षापदव्युत्पत्तिश्च]

कुण्डमण्टपहोमाद्यैर्न्यासैरध्वकलादिभिः ।
मन्त्रोपदेशसहिता क्रिया दीक्षेति [1] कथ्यते ॥ १० ॥

दीयते लिङ्गसंबन्धः क्षीयते कर्मसञ्चयः ।
दीयते क्षीयते यस्माद्दीक्षेति [2] कथिता बुधैः ॥ ११ ॥

[शिक्षास्वरूपम्]

गुरुलिङ्गचराख्यानां लिङ्गानामेकरूपकम् ।
यज्ज्ञानं बोधितं सद्भिः सा शिक्षेति निगद्यते ॥ १२ ॥

[अनुभावस्वरूपम्]

संस्कारैः प्राक्तनैर्देवि ! स्वकीयसुकृता[3]र्जितैः ।
भक्तिश्रद्धार्चनाद्यैर्यदनुभावः स उच्यते ॥ १३ ॥

---

1. गीयते-कि.
2. परिगीयते-कि.
3. र्जनैः-ग. मु.

[आचारलिङ्गत्रैविध्यम्]

स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।
सदाचारस्तु नियतो गणाचारस्ततः परम् ॥ १४ ॥

[सदाचारलक्षणम्]

सज्जनश्शिवभक्तश्च येन मार्गेण सर्वदा ।
तुष्टस्तोषयते देवि! सदाचारः स वै स्मृतः ॥ १५ ॥

[नियताचारलक्षणम्]

यस्तु स्वकृतमाचारं न त्यक्ष्येऽहं तदत्यये ।
त्यजाम्यसूनिति स वै नियताचार ईरितः ॥ १६ ॥

[गणाचारलक्षणम्]

गुरुलिङ्गादिविषयं न श्राव्यं दूषणं यदि ।
श्रुतवान् शिक्षयामीति गणाचारः [1]स विश्रुतः ॥ १७ ॥

[प्रसादलिङ्गत्रैविध्यम्]

प्रसादलिङ्गत्रैविध्यमपि शृणु वरानने! ।
शुद्धं सिद्धं प्रसिद्धं च भेदश्चैषामथोच्यते ॥ १८ ॥

[शुद्धप्रसादलक्षणम्]

आदौ गुरुत्रयं ज्ञात्वा ततस्तद्दास्यभावतः ।
तद्भुक्तशेषभोगे यः स शुद्धः परिकीर्तितः ॥ १९ ॥

[सिद्धप्रसादलक्षणम्]

ज्ञात्वा लिङ्गत्रयं सम्यक् तदैक्यं च वरानने! ।
लिङ्गार्पितप्रसादोऽयं सिद्ध इत्याहुरास्तिकाः ॥ २० ॥

---

1. मानपि–क्रि.

[प्रसिद्धप्रसादलक्षणम्]

[1]गुरुलिङ्गचराणां चाप्यभेदाद्भक्ति[2]संयुतः ।
यः परित्यक्तविषयः प्रसिद्धः स उदाहृतः ॥ २१ ॥

[चरलिङ्गत्रैविध्यं तल्लक्षणं च]

चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते ।
स्वयं चरं परं चेति त्रैविध्यं समुपागतम् ॥ २२ ॥

[स्वयंलिङ्गस्वरूपम्]

लिङ्गलाञ्छनसंयुक्तो बहिःकृत्यविवर्जितः ।
केवलानन्दरूपो यः स स्वयंलिङ्गमीरितः ॥ २३ ॥

[चरलिङ्गलक्षणम्]

स्वच्छन्दचारी स्वाभिन्नलिङ्गरूपो निराकुलः ।
लिङ्गन्यस्तकलाशुद्धिः स चरं लिङ्गमुच्यते ॥ २४ ॥

[परलिङ्गस्वरूपम्]

निर्द्वन्द्वो हि सदा स्थाणुर्गमागमविवर्जितः ।
ज्योतिर्लिङ्गस्वरूपो यः परलिङ्गमुदाहृतः[3] ॥ २५ ॥

---

1. यतो–मु.
2. मानपि–क्रि.
3. इतः परं अयं भागः आवश्यकः (क्रियासारः) शिवलिङ्गत्रैविध्यं तल्लक्षणं च :—

शिवलिङ्गस्वरूपं ते वक्ष्यामि शृणु पार्वति ! ।
इष्टलिङ्गं प्राणलिङ्गं भावलिङ्गमिति त्रिधा ॥

इष्टलिङ्गलक्षणम् :—

दीक्षां विधाय गुरुणा यल्लिङ्गं प्रतिपादितम् ।
मंत्रोपदेशसहितमिष्टलिङ्गमुदाहृतम् ॥

[प्राणलिङ्गस्वरूपम्]

त्यक्तदेहेन्द्रियगुणः शिवार्पितनिजान्तरः ।
शिव एव मनो लीनं प्राणलिङ्गं तदुच्यते ॥ २६ ॥

[भावलिङ्गलक्षणम्]

जाग्रदादिष्ववस्थासु ज्यौतिर्लिङ्गैकमानसम् ।
अज्ञानविनिवृत्तं यद्भावलिङ्गं तदुच्यते ॥ २७ ॥

[महालिङ्गत्रैविध्यं तल्लक्षणं च]

महालिङ्गस्थलं चापि त्रिधा भिन्नं शृणु प्रिये ।
पिण्डजं प्रथमं प्रोक्तमण्डजं च ततः परम् ॥ २८ ॥

बिन्द्वाकाश ततो ज्ञेयमेषां लक्षणमुच्यते ।

[पिण्डजलिङ्गलक्षणम्]

देहो देवालयः प्रोक्तो जीवो देवस्सदाशिवः ॥ २९ ॥

इति निश्चितसद्भावः पिण्डजं लिङ्गमुच्यते ।

[अण्डजलिङ्गस्वरूपम्]

पीठिका पृथिवीलिङ्गमाकाशं सृष्टिकारणम् ॥ ३० ॥

निस्सन्देहमिदं ज्ञानमण्डजं लिङ्गमीरितम् ।

[बिन्द्वाकाशलिङ्गलक्षणम्]

ध्यात्वाऽऽत्मानमथाकाशे ध्यात्वाऽऽकाशं तथाऽऽत्मनि ॥ ३१ ॥

आत्माकाशमयं लिङ्गं बिन्द्वाकाशमुदाहृतम् ।

देवी :—

एषु लिङ्गेषु देवेश ! कथं पूजादिकं भवेत् ॥ ३२ ॥

सदाचारस्तु को वाऽत्र प्रसादः कीदृशो भवेत् ।
एतत्सर्वं समासेन कृपया वद मे प्रभो! ॥ ३३ ॥

[षट्स्थलनामानि तल्लक्षणानि च]

शिवः :—

अङ्गस्थलं समासेन वक्ष्ये षड्विधमादितः[1] ।
भक्तो माहेश्वरश्चैव प्रसादी प्राणलिङ्गकः ॥ ३४ ॥

शरणः शिवलिङ्गैक्यं षट्स्थलं मम पार्वति! ।
अथैषां लक्षणं वक्ष्ये शृणुष्व सुसमाहिता[2] ॥ ३५ ॥

[भक्तस्थलादिलक्षणम्]

त्यक्ताभिमानो देहादौ भक्त इत्युच्यते बुधैः ।
तच्चित्तमचलं यस्य स वै माहेश्वरः स्मृतः ॥ ३६ ॥

चित्तशुद्धिर्भवेद्यस्य स प्रसादी भवत्यसौ ।
त्यक्तजीवभ्रमश्चायं लिङ्गात्मा प्राणलिङ्गकः ॥ ३७ ॥

[3] शिवं निश्चित्य निश्चिन्तः सानन्दः शरणो भवेत् ।
शिवजीवो भयभ्रान्तिरहितश्चैक्यमुच्यते ॥ ३८ ॥

[भक्तत्रैविध्यम्]

गुरुभक्तो लिङ्गभक्तश्चरभक्तस्तथैव च ।
एवं भेदसमायुक्त स भक्तः त्रिविधो भवेत् ॥ ३९ ॥

---

1. इतः परं अयमधिको भागः क्रियासारे वर्तते :—
   यस्मिन् ज्ञाते महादेवि ! ज्ञायते चाधिकं ततः ।
2. इतःपरं अयमधिको भागः क्रियासारे वर्तते :—
   गोपनीयं प्रयत्नेन शिवानुग्रहमिच्छता ।
3. शिवनित्यत्व–ग.

[पुनस्तत्र आद्यः षड्विधः]

मोही भक्तः पूजकश्च वीरशैवप्रसादवान् ।
प्राणी च गुरुलिङ्गादिष्वेवं भक्तोऽपि षड्विधः ॥ ४० ॥

[मोहीभक्तस्वरूपम्]

त्यक्त[1]वित्तादिमोहः सन् गुरुलिङ्गैकमोहवान् ।
एवं यो वर्तते देवि! स तन्मोहीति कथ्यते ॥ ४१ ॥

[भक्तभक्तस्वरूपम्]

लौकिकान् बान्धवांस्त्यक्त्वा गुरुलिङ्गैकबान्धवः ।
हर्षपूर्णो महादेवि! स तद्भक्त इति स्मृतः ॥ ४२ ॥

[पूजकस्वरूपम्]

पूजामन्यां परित्यज्य गुरुलिङ्गैकपूजकः ।
अतिनिष्ठापरो यस्तु सवै तत्पूजकः स्मृतः ॥ ४३ ॥

[वीरलक्षणम्]

गुरूपदिष्टमेवाथ समाचरणमाचरन् ।
यश्च त्यक्तेतराचारो गुरुवीरः स उच्यते ॥ ४४ ॥

[गुरुप्रसादीस्वरूपम्]

यो वै न लङ्घयेद्देवि! कदाचिद्गुरुशासनम् ।
सवै गुरुप्रसादी स्यान्निवृत्तेतरशासनः ॥ ४५ ॥

[गुरुप्राणीस्वरूपम्]

सेवामन्यां परित्यज्य गुरुलिङ्गैकसेवकः ।
वर्तते यः स्थिरतरो गुरुप्राणी स हि स्मृतः ॥ ४६ ॥

1. पित्रादि-क्रि.

एवं भेदैश्च मां देवि! गुरु[1]मूर्तिधरं शिवम् ।
भजेतानन्यचित्तो यः सः मुक्तः स्यान्नसंशयः ॥ ४७ ॥

[षड्विधाचारलिङ्गानि]

एवमाचारलिङ्गेऽपि षट्भेदास्सुर्भवन्ति हि ।

[आचारलिङ्गमोहीलक्षणम्]

मोहं त्यक्त्वा कलत्रादौ मोहीत्याचार एव हि ॥ ४८ ॥

शिवाचारविरुद्धांश्च त्यजेदपि सुतादिकान् ।
अथवाऽऽचारमोही स्यादन्याचारविवर्जितः ॥ ४९ ॥

[आचारलिङ्गभक्तस्वरूपम्]

पूर्वाचारं परित्यज्य शिवाचारं समाश्रितः ।
आचारलिङ्गभक्तः स्याद्विरुद्धाचारवर्जितः ॥ ५० ॥

[आचारलिङ्गपूजकलक्षणम्]

अन्यपूजां परित्यज्य लिङ्गपूजैकतत्परः ।
शिवाचारपरो यस्तु सः स्यादाचारपूजकः ॥ ५१ ॥

[आचारलिङ्गवीरलक्षणम्]

अपि प्राणात्यये देवि! स्वाचारं न परित्यजेत् ।
आचारवीरस्स भवेदाचारैकपरायणः ॥ ५२ ॥

[आचारलिङ्गप्रसादकस्वरूपम्]

शुचित्वमशुचित्वं चेत्यादि सन्देहवर्जितः ।
ग्राह्याग्राह्यादिरहितः स्यादाचारप्रसादकः ॥ ५३ ॥

---

1. मुक्ति-ग.

[आचारलिङ्गप्राणीस्वरूपम्]

परैः कृतां भक्तिनिन्दां श्रुणुयान्न हि कुत्रचित् ।
इति बुद्ध्या सदाचारलिङ्गप्राणीति कथ्यते ॥ ५४ ॥

एवमाचारलिङ्गैकतत्परो मां समाश्रयेत् ।
प्रतिपद्य सः नित्यत्वं गाणापत्यमवाप्नुयात् ॥ ५५ ॥

[प्रसादलिङ्गस्थलम्]

एवं प्रसादलिङ्गस्य स्थलं च शृणु तत्त्वतः ।

[प्रसादलिङ्गमोहीलक्षणम्]

अन्यद्रव्यरुचिं त्यक्त्वा पूर्वभोज्यादिवर्जितः ॥ ५६ ॥

प्रसादलिङ्गमोही स्यादन्यमोहविवर्जितः ।

[प्रसादलिङ्गभक्तलक्षणम्]

प्रसादलिङ्गभक्तस्तु पूर्वाहारनिरासकः ॥ ५७ ॥

[प्रसादलिङ्गपूजकस्वरूपम्]

देवि! प्रसादलिङ्गस्य पूजकोऽनन्यपूजकः ।

[प्रसादलिङ्गवीरलक्षणम्]

परवित्तं परस्त्रीं च परमैत्रीं [1] पराश्रयम् ॥ ५८ ॥

त्यक्त्वा प्रसादलिङ्गैकपरः स्यान्निस्पृहस्सदा ।

[प्रसादलिङ्गप्रसादीस्वरूपम्]

आदानार्थं च दानार्थं करौ नैव प्रसारयेत् ॥ ५९ ॥

---

1. परश्रियाम्–क्रि.

नैव किंचित्प्रसा[1]दान्यत्प्रसादी क्वापि संस्पृशेत् ।

[प्रसादलिङ्गप्राणीलक्षणम्]

न कुर्याज्जीवहिंसां च परैर्वा नापि कारयेत् ॥ ६० ॥

प्रसादलिङ्गप्राणी स्यात्सा भवेदात्म[2]भावकः ।
इत्थं प्रसादलिङ्गैकपरो भूतदयान्वितः ॥ ६१ ॥

यः पूजयति मां देवि ! मत्सायुज्यमवाप्नुयात् ।

[ चरलिङ्गस्थलम् ]

चरलिङ्गस्थलेऽप्येवं भक्तस्याचरणं शृणु ॥ ६२ ॥

[चरलिङ्गमोहीस्वरूपम् ]

कुलं चैव कुलाचारं नियमं च विवर्जयेत् ।
चरलिङ्गैकमोही स्यादन्यमोहविवर्जितः ॥ ६३ ॥

[चरलिङ्गभक्तलक्षणम्.]

त्यक्ताभिमानो देहादौ जङ्गमैकाभिमानवान् ।
चरलिङ्गैकभक्तः स्यादन्यभक्तिविवर्जितः ॥ ६४ ॥

[चरलिङ्गपूजकलक्षणम् ]

अन्यपूजां परित्यज्य चरलिङ्गं प्रपूजयेत् ।
स्वयं च चरलिङ्गस्य पूजको नान्यपूजकः ॥ ६५ ॥

[चरलिङ्गवीरस्वरूपम् ]

अथ प्राणादिकं सर्वं प्रीत्या कुर्याच्चरार्पितम् ।
चरलिङ्गैकवीरः स्यादन्यां भूयोऽपि न स्मरेत् ॥ ६६ ॥

---

1. दः स्यात्प्र–मु.
2. बाधकः–ग.

[चरलिङ्गप्रसादीलक्षणम्]

सर्वं चरार्पितं कृत्वा तत्प्रसादं विशेषतः ।
यो भुङ्क्ते चरलिङ्गस्य प्रसादी नान्यलोलुपः ॥ ६७ ॥

[चरलिङ्गप्राणीलक्षणम्]

शिवलाञ्छनसंयुक्ता[1]न् बिन्दद्वैतमदात्मकान् ।
अयं तु चरलिङ्गैकप्राणः स्यान्नान्यमानसः ॥ ६८ ॥

एवं मद्रूपतापन्नं चरलिङ्गं समर्चयन् ।
गणत्वं प्राप्य सुचिरं मोदते घनलीलया ॥ ६९ ॥

[शिवलिङ्गस्थलम्]

शिवलिङ्गस्थलेऽप्येवं षड्विधं व्रतमाचरेत् ।

[शिवलिङ्गमोहीलक्षणम्]

शिवलिङ्गैकमोही स्यादन्यमोहविवर्जितः ॥ ७० ॥

[शिवलिङ्गपूजकलक्षणम्]

अनन्यदेवपूजः स्याच्छिवलिङ्गैकपूजकः ।

[शिवलिङ्गवीरलक्षणम्]

शिवलिङ्गैकवीरः स्यात्पुण्यक्षेत्रादिनिस्पृहः ॥ ७१ ॥

[शिवलिङ्गप्रसादीलक्षणम्]

शिवलिङ्गप्रसादी स्यान्निर्द्वन्द्वोऽन्यानपेक्षकः ।

[शिवलिङ्गप्राणीलक्षणम्]

यस्सदा शिवलिङ्गैकप्राणो भोगविवर्जितः ॥ ७२ ॥

---

1. न् श्चिदद्वैत-क्रि.

एवं भेदेन मां देवि! पूजयेल्लिङ्गरूपिणम् ।
गाणापत्यं भवेत्तस्य दुर्लभं प्राकृतात्मनाम् ॥ ७३ ॥

[महालिङ्गस्थलम्]

महालिङ्गस्थलेऽप्येवं विभेदः कथ्यतेऽधुना ।

[महालिङ्गमोहीस्वरूपम्]

त्यक्तलोकसमाचारो लिङ्गनिष्ठैकमानसः ॥ ७४ ॥

स महालिङ्गमोही स्याल्लिङ्गमोहविवर्जितः ।

[महालिङ्गभक्तलक्षणम्]

पूर्वभक्तस्थलं त्यक्त्वा पूर्वकर्मादि वर्जयेत् ॥ ७५ ॥

स महालिङ्गभक्तः स्यादन्यभक्तिविवर्जितः ।

[महालिङ्गपूजकस्वरूपम्]

त्यजेत्संसर्गमन्येषां सहवासादिकं त्यजेत् ॥ ७६ ॥

शुद्धसत्वाश्रयो यस्तु स महालिङ्गपूजकः ।

[महालिङ्गवीरस्वरूपम्]

सृष्टिस्थितिलयाद्यं यः जीववृत्तिं न च स्मरेत् ॥ ७७ ॥

स महालिङ्गवीरः स्यान्नान्य[1]लिङ्गसमाश्रयः ।

[महालिङ्गप्रमादीस्वरूपम्]

पूर्ववासादिकं सर्वमन्तर्लिङ्गे निवेशयेत् ॥ ७८ ॥

महालिङ्गप्रसादी स्यात्पङ्क्तिभोजनवर्जितः ।

[महालिङ्गप्राणीलक्षणम्]

बाह्यार्चनाद्यं सन्त्यज्य भवेदान्तरपूजकः ॥ ७९ ॥

---

1. चित्र-ग.

आत्मार्पणान्महालिङ्गप्राणी भवति पार्वति! ।
महालिङ्गस्थलेऽप्येवं मानसैरुपचारकैः ॥ ८० ॥

अर्चयेद्यस्तु मां नित्यं मत्सायुज्यमवाप्नुयात् ।
एवं लिङ्गस्थलं देवि! तदङ्गस्थलयोगतः ॥ ८१ ॥

एकैकं षड्विधं प्रोक्तं तेन षट्त्रिंशदात्मकम् ।
पूर्वपूजासमायोगादुत्तरोत्तरमाश्रयेत् ॥ ८२ ॥

तस्मादेकं परं लिङ्गं नामरूपक्रियात्मना ।
संस्थितं ज्ञानकर्मभ्यां अङ्गेऽस्मिन् षट्स्थलात्मके ॥ ८३ ॥

[शरीरे इष्टादिलिङ्गानां स्थानम्]

इष्टलिङ्गं तु बाह्याङ्गे प्राणलिङ्गं तथाऽऽन्तरे ।
आत्मनि स्याद्भावलिङ्गमेवं ज्ञेयं नगात्मजे! ॥ ८४ ॥

[गुरुलिङ्गादीनां ज्ञानेन्द्रियेषु योगः कर्मेन्द्रियेषु तदतिदेशश्च]

जिह्वा[1]ङ्गे गुरुलिङ्गं स्यादाचारं नासिकाङ्गके ।
प्रसादलिङ्गं श्रोत्राङ्गे त्वगङ्गे चरलिङ्गकम् ॥ ८५ ॥

दृगङ्गे शिवलिङ्गं स्यान्महालिङ्गं हृदि स्थितम् ।
एवं कर्मेन्द्रियाङ्गेषु लिङ्गयोगं विदुर्बुधाः ॥ ८६ ॥

[लिङ्गाङ्गसम्बन्धकथनम्]

आचारलिङ्गं[2]यत्प्रोक्तं शिवलाञ्छनसंयुतम् ।
आचारलिङ्गसम्बन्धि गुरुलिङ्गमुदाहृतम् ॥ ८७ ॥

---

1. ग्रे च सदाचारं ज्योतिर्ज्ञैर्नासिकाग्रके–मु.
2. प्रत्येकं–ग.

गुरुलिङ्गोपदिष्टं यच्छिवलिङ्गमुदाहृतम् ।
शिवलिङ्गमुखं यच्च चरलिङ्गमुदाहृतम् ॥ ८८ ॥

चरलिङ्गोपलब्धं च [1] तत्प्रसादाङ्गमुच्यते ।
प्रसादानुग्राहकं स्यान्महालिङ्गमिति क्रमात् ॥ ८९ ॥

गुरुलिङ्गस्थलादीनां सम्बन्धं चोत्तरोत्तरम् ।
ज्ञात्वा लिङ्गाङ्गयोरर्थं तत्सम्बन्धं च पार्वति! ॥ ९० ॥

गुरूक्तेनैव मार्गेण जानीयात्सूक्ष्मभावतः ।
एवं लिङ्गाङ्गसम्बन्धज्ञानं गोप्यं सुदुर्लभम् ॥ ९१ ॥

उपदिष्टं तव प्रीत्या मोक्षमार्गैकसाधनम् ।
वीरशैवपरो भूत्वा यजेन्मां लिङ्गरूपिणम् ॥ ९२ ॥

[षट्स्थलज्ञानवतः त्रिलोकश्रैष्ठ्यम्]

स एव सर्वतत्त्वज्ञो ज्ञेयः सर्वोत्तमोत्तमः ।
क्रिमिकीटपतङ्गेभ्यः पशवः प्रज्ञयाऽधिकाः ॥ ९३ ॥

पशुभ्यो हि नराः श्रेष्ठाः तेषु श्रेष्ठा द्विजातयः ।
द्विजातिष्वधिका विप्राः विप्रेषु कृतबुद्धयः ॥ ९४ ॥

कृतबुद्धिषु कर्तारः तेभ्यः सन्यासिनोऽधिकाः ।
तेषु विज्ञानिनः श्रेष्ठाः तेषु शङ्करपूजकाः ॥ ९५ ॥

तेषु श्रेष्ठा महाभागा [2] मम लिङ्गाङ्गसङ्गिनः ।
लिङ्गाङ्गसङ्गिष्वधिकः षट्स्थलज्ञानवान्नरः ॥ ९६ ॥

---

1. लिङ्गं प्रसादमुच्यते–क्रि.
2. महालिङ्गा–मु.

[1] तस्मादप्यधिको नास्ति त्रिषु लोकेषु सर्वदा ।

[महीपालकुमारयोराशयविवरणेन ग्रन्थोपसंहारः]

एवं षट्स्थलभेदाश्च तत्स्वरूपं च कीर्तितम् ॥ ९७ ॥

पूर्वोक्तानादिभक्तस्य नित्यं निर्मलताजुषः ।
एतानि षट्स्थलान्येव त्वं जानीषि षडङ्गकम् ॥

इदमेव परं ब्रूमो हितं तव विशेषतः ॥ ९८ ॥

एतादृशं मनसि तत्त्वमनादिभक्त-
शब्देन कीर्तितमुपास्य च सार्वकालम् ।
आचन्द्रतारमवनीपतिसेविताङ्घ्रि-
पङ्केरुहो मम कुमार! सुखी भव त्वम् ॥ ९९ ॥

यत्पादपङ्कजमतीव सुदुस्तरं तत्
निर्धूय बोधमयदीपमपि प्रबोध्य ।
निर्वापितामितमहाहृदयान्धकार!
विद्यासुखार्णव! गुरो! शरणं मम स्याः ॥ १०० ॥

दैत्याप्सरस्सुरनरोरगतर्कवेद-
नानागमानुगपुराणमतादिभिश्च ।
यन्मृग्यते जगति तादृशतत्त्वदर्शिन्!
विद्यासुखार्णवगुरो! शरणं मम स्याः ॥ १०१ ॥

---

1. तस्मात्तेभ्योऽधिकतरा लोके सन्ति न वै जनाः—क्रि.

पञ्चाध्वनामुपरि यान्ति कलास्तदूर्ध्वं
विद्योतमानगगनामलशक्त्यतीते ।
योगप्रदातरि विनीतपरस्वरूपे
विद्यासुखार्णवगुरो ! शरणं मम स्याः ॥ १०२ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानविन्दुकारणचिदम्बर-
शक्तिसमन्वित परमेश्वरप्रसादासादित शिवाद्वैतविद्याविशारद
श्रीमत्केलदिवसवराजेन्द्र विरचिते वेदागमान्तर्गत-
विविधविद्यातत्त्वसारभूते शिवतत्त्वरत्नाकरे
नवमकल्लोले षट्स्थलज्ञाननिरूपणं
नाम नवमस्तरङ्गः

—o—

## नवमकल्लोलीयविषयाकरग्रन्थाः

—o—

शारीराख्योपनिषदं गर्भोपनिषदं तथा ।
पुराणानि कृतिं चैव शैवसिद्धान्तदीपिकाम् ॥ १ ॥

मीमांसान्यायकाणादयोगवेदान्तसांख्यगाः ।
बौद्धचार्वाकजैनीयाः कृतीश्चागमविस्तरम् ॥ २ ॥

आलोक्यायं सङ्गृहीतः कल्लोलो नवमोऽभवत् ।

तरङ्गैर्नवभिर्युक्ते ग्रन्थानामितरत्र तु ।
पञ्चविंशत्यभ्यधिकशतोपेतसहस्रकम् ॥ ३ ॥

श्रीमत्सद्गुणसोमशेखरलसच्चन्नाम्बिकासूनुना
श्रीदीक्षागुरुचन्नवीरकरसञ्जातेन विद्याब्धिना ।
गौरीभर्तृकृपास्पदेन बसवक्षोणीभृता निर्मिते
कल्लोलो नवमस्त्वयं कृतिवरे त्वस्मिन्नभूत्पूरितः ॥ ४ ॥

—o—

## ग्रन्थोपसंहारः

—o—

श्रीवीरभद्रकरुणासमुपार्जितश्री-
साम्राज्यवैभवपराक्रमकीर्तिभाजा ।
सौराष्ट्रयतौलवसकेरलमल्लराष्ट्र-
त्रैगर्तदेशपरिपालनदक्षिणेन ॥ १ ॥

परयडवमुगरिकोटिकोलाहलेन
प्रविचलितविशुद्धाद्वैतसिद्धान्तभूम्ना ।
असियुगलभृतां च वैरिसप्ताङ्गलक्ष्मी-
हरहरितपटोद्यत्केतनश्रीयुतेन ॥ २ ॥

चौडप्पनायकसमुन्मिषितान्ववाय-
दुग्धाब्धिवृद्धिकरकैरवबान्धवेन ।
एकाङ्गवीररणरङ्गविहारधीर-
दोनेजपश्चिमसरस्पदधीश्वरेण ॥ ३ ॥

स्वाभीष्टदायिकेलदीस्थितवीरभद्र-
मुद्राबलेन परिपालयता धरित्रीम् ।
राजाधिराजकेलदिबसवक्षितीन्द्र-
रत्नेन संविरचितेति कृतिः प्रपूर्णा ॥ ४ ॥

श्रीमत्युन्नतशालिवाहनशके चन्द्राग्न्यृतक्ष्मामिते
वर्षे विश्रुतसर्वधारिणि तथा मासे नभस्याह्वये ।
वारे निर्जरवैरिणामपि गुरोः श्रीपौर्णमासीदिने
ग्रन्थोऽयं परिपूर्णतामवहत प्रख्यातसारार्थयुक् ॥ ५ ॥

अनुत्तरगभीरिमाबहुतरङ्गकल्लोलवान्
उदित्वरकलाश्रयो महितरत्नलक्षान्वितः ।
अयं जनितधीसुधः स शिवतत्त्वरत्नाकरः
क्षितौ विजयतां चिरं कृतिवरोऽखिलाश्चर्यकृत् ॥ ६ ॥

शक्तस्तरीतुं न भवेत्परैर्यः
आदेयतामप्यखिलस्य धत्ते ।
स एव भूयः शिवतत्त्व-
रत्नाकरस्सतां कौतुकमातनोतु ॥ ७ ॥

दोषैरेष विवर्जितो घनगुणैरालिङ्गितः सप्रभः
सद्वृत्तो बहुलार्थयुग्मविलसत्कल्लोलरत्नान्वितः ।
ग्रन्थोऽयं मणिहारवत्तव शतेनाष्टोत्तरेणाधुना
गौरीनाथ! भवेत्तरङ्गमणिभिर्विभ्राजितो भूषणम् ॥ ८ ॥

एतच्छात्राः ये पठन्ति शृण्वन्ति विलिखन्ति वा ।
तेषामायुररोगत्वपुत्रपौत्रादिसम्पदः ॥ ९ ॥

धनधान्यसमृद्धिश्च सौभाग्यमपि चाधिकम् ।
प्रतिक्षणं संभवन्ति तरङ्गा इव वारिधेः ॥ १० ॥

साम्राज्यादिसुखानीह
समासाद्य ततः परम् ।
शिवलिङ्गैकसम्पत्त्या
परानन्दं भजन्ति ते ॥ ११ ॥

इति श्रीमत्केलदिबसवराजेन्द्रविरचितः श्रीशिवतत्त्वरत्नाकरः सम्पूर्णः

शुभं भूयात्

—o—

# अनुबन्धः

—o—

१. संख्यागर्भितपारिभाषिकपदानुक्रमणी ।

२. पदविशेषानुक्रमणी ।

## शिवतत्त्वरत्नाकरतृतीयसंपुटस्याकारादिक्रमतः संख्यागर्भित-पारिभाषिकपदानुक्रमणिका

—o—

**चतुर्दशलोकाः**—अतलम्, वितलम्, सुतलम्, प्रतलम्, तलातलम्, रसातलम्, पातालम्, भूर्लोकः, भुवर्लोकः, स्वर्लोकः, महर्लोकः, जनलोकः, तपोलोकः, सत्यलोकः।

**चतुर्विधबौद्धाः**—वैभाषिकः, सौत्रान्तिकः, योगाचारः, माध्यमिकः।

**चतुर्विधव्यूहदेवाः**—वासुदेवः, सङ्कर्षणः, प्रद्युम्नः, अनिरुद्धः।

**चतुर्विंशतिगुणाः**—रूपम्, रसः, गन्धः, स्पर्शः, संख्या, परिमाणः, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, गुरुत्वम्, द्रवत्वम्, स्नेहः, शब्दः, बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नम्, धर्मः, अधर्मः, संस्कारः।

**चतुर्विंशत्युपचाराः**—आवाहनम्, आसनम्, पाद्यम्, अर्घ्यम्, आचमनम्, स्नानम्, वस्त्रम्, उपवीतम्, अक्षता, गन्धः, पुष्पम्, धूपः, दीपः, नैवेद्यम्, फलम्, ताम्बूलम्, स्तुतिः, प्रदक्षिणम्, नमस्कारः, शय्या, सङ्गीतम्, वाद्यम्, नृत्तम्, आत्मारोपणम्।

**चतुर्विंशत्युपचाराः**—आसनम्, आह्वानम्, अर्घ्यम्, पाद्यम्, आचमनम्, यज्ञोपवीतम्, मालालेपनम्, आभरणम्, छत्रम्, चामरम्, तालवृन्तम्, दर्पणम्, घण्टा, शङ्खम्, गीतम्, वाद्यम्, नृत्तम्, प्रदक्षिणम्, नमस्कारः, स्तुतिः, यज्ञः, विज्ञप्तिः, विसर्जनम्।

**चत्वारि तन्त्राणि**—गारुडम्, दक्षिणम्, वामम्, भूतम्।

**त्रयः आचाराः**—सदाचारः, नियताचारः, गणाचारः।

त्रयः उपचाराः— स्नानम्, पूजा, नैवेद्यम्।

दशचक्राणि—आधारम्, स्वाधिष्ठानम्, मणिपूरकम्, अनाहतम्, विशुद्धिः, ललना, आज्ञा, मनः, सोमचक्रम्, सहस्रपत्रम्।

दीक्षात्रैविध्यम्— वेधदीक्षा, मन्त्रदीक्षा, क्रियादीक्षा।

द्वात्रिंशदुपचाराः—आवाहनम्, आसनम्, पाद्यम्, अर्घ्यम्, आचमनम्, स्नानम्, वस्त्रम्, उपवीतम्, भूषणम्, अनुलेपनम्, तिलाक्षताः, पुष्पम्, धूपम्, दीपः, नैवेद्यम्, मुखवासनम्, नीराजः, दर्पणम्, फलम्, प्रदक्षिणम्, ताम्बूलम्, नमस्कारः, स्तुतिः, पुराणपठनम्, छत्रम्, व्यजनम्, चामरम्, शय्या, सङ्गीतम्, नृत्तम्, वाद्यम्, आत्मारोपणम्।

नवग्रहाः—सूर्यः, चन्द्रः, कुजः, बुधः गुरुः, शुक्रः, मन्दः, राहुः, केतुः।

नवद्रव्याणि—पृथ्वी, अप्, तेजः, वायुः, व्योम, कालः, दिक्, आत्मा, मनः।

पञ्च अजीवद्रव्याणि—पुद्गलः, धर्मः, अधर्मः, कालः, आकाशः।

पञ्चकञ्चुकम्—कला, विद्या, कालः, रागः, नियतिः।

पञ्च कर्माणि—उत्क्षेपणम्, अपक्षेपणम्, आकुञ्चनम्, प्रसारणम्' गमनम्।

पञ्च कर्मेन्द्रियाणि— वाक्, पाणिः, पादः, पायुः, उपस्थम्।

पञ्च कलाः— निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः शान्त्यतीता, शान्त्यतीतोत्तरा।

पञ्च ज्ञानेन्द्रियाणि—नासिका, लोचनम्, जिह्वा, त्वक्, श्रोत्रम्।

पञ्च तन्मात्राणि—गन्धः, रसः, रूपम्, शब्दः, स्पर्शः ।

पञ्च भूतनायकाः—ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः, सदाशिवः ।

पञ्च भूतानि—पृथिवी, अप्, तेजः, वायुः, आकाशः ।

पञ्चावयववाक्यम्—प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयनम्, निगमनम् ।

पञ्चोपचाराः—स्नानम्, पूजा, नैवेद्यम्, प्रदक्षिणम्, नमस्कारः ।

पाशचतुष्टयम्—मायेयम्, आणवम्, कार्मम्, बैन्दवम् ।

भस्मपञ्चकम्—विभूतिः, भसितम्, भस्मः, क्षारम्, रक्षा ।

विषयपञ्चकम्—गन्धः, रूपम्, रसः, स्पर्शः, शब्दः ।

षट्त्रिंशत्तत्त्वानि—शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, कालः, नियतिः, विद्या, रागः, पुरुषः, प्रकृतिः, बुद्धिः, अहङ्कारः, चित्तम्, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, तन्मात्रपञ्चकम्, पञ्चभूतानि ।

षट्प्रमाणानि—प्रत्यक्षम्, अनुमानम्, उपमानम्, आगमः, अर्थापत्तिः, अनुपलब्धिः ।

षट्भावपदार्थाः—द्रव्यम्, गुणः, कर्म, जातिः, विशेषः, समवायः ।

षटवैदिकदर्शनानि—वैशेषिकः, न्यायः, मीमांसा, सांख्यः, योगः, वेदान्तदर्शनम् ।

षट्समयाः—शैवः, पाशुपतः, कालामुखः, कापालिकः, बौद्धः, आर्हतः ।

षट्स्थलानि—भक्तस्थलम्, महेशस्थलम्, प्रसादिस्थलम्, प्राणलिङ्गिस्थलम्, शरणस्थलम्, ऐक्यस्थलम् ।

षडध्वानः—भुवनाध्वा, वर्णाध्वा, पदाध्वा, मन्त्राध्वा, कलाध्वा, शब्दाध्वा ।

**षडन्नभेदाः**—भक्ष्यम्, भोज्यम्, पेयम्, लेह्यम्, चोष्यम्, पिच्छिलम् ।

**षड्दार्शनिकाः**—अक्षपादः, कणादः, कपिलः, जैमिनिः, बादरायणः, पातञ्जलः ।

**षड्दैवतदर्शनानि**—सौरम्, वैनायकम्, ब्राह्मम्, शाक्तेयम्, शैवम्, वैष्णवम् ।

**षड्रसाः**—मधुरः, आम्लः, कटुः, कषायः, लवणः, तिक्तः ।

**षड्लिङ्गानि**—गुरुलिङ्गम्, आचारलिङ्गम्, प्रसादलिङ्गम्, चरलिङ्गम्, शिवलिङ्गम्, महालिङ्गम् ।

**षड्विधभावाः**—मातृजाः, पितृजाः, रसजाः, आत्मजाः, सात्विकाः, सत्वसंभवाः ।

**षोडशोपचाराः**—आवाहनम्, आसनम्, पाद्यम्, अर्घ्यम्, आचमनम्, स्नानम्, वस्त्रम्, उपवीतम्, गन्धः, पुष्पम्, धूपम्, दीपम्, नैवेद्यम्, प्रदक्षिणम्, नमस्कारः, आत्मारोपणम् ।

**सप्तकुलपर्वताः**—मेरुः, मन्दरः, कैलासः, हिमालयः, निषधः, गन्धमादनः, विन्ध्यः ।

**सप्ततत्त्वानि**—जीवः, अजीवः, आश्रवः, निर्जरः, संवरः, भवः, मोक्षः ।

**सप्तद्वीपाः**—जम्बुः, प्लक्षः, कुशः, क्रौञ्चः, शाल्मलिः, गोमेदः, पुष्करः ।

**सप्तसागराः**—क्षारोदः, क्षीरोदः, दध्यर्णवः, सर्पिरर्णवः, रसोदधिः, सुरोदधिः, स्वादूदः ।

**हेत्वाभासाः**—अनैकान्तः, विरुद्धः, सत्प्रतिपक्षः, असिद्धः, बाधः ।

—o—

# शिवतत्त्वरत्नाकरतृतीयसंपुटस्याकारादिक्रमतः

## विशेषपदानुक्रमणिका

—o—

### अ

पुटम्–श्लोकः



### आ

प

# अशुद्धसंशोधनी

—०—

| पुटम् | पङ्क्तिः | पठनीयः पाठः |
|---|---|---|
| 3 | 9 | तत् काङ्क्षते |
| 8 | 6 | श्रवणे वाऽपि |
| 12 | 5 | ब्रह्मा च |
| 13 | 1 | त्रिपुण्ड्र |
| 13 | 15 | स्तेजोराशिर्भवे |
| 14 | 6 | श्रुतिः |
| 14 | 18 | तिर्यक् |
| 14 | 19 | कुण्ठनम् |
| 14 | 20 | स त्यागी |
| 14 | 21 | जन्मन्यसत्कृताम् |
| 21 | 2 | मूर्ध्नि |
| 21 | 9 | मुनिश्रेष्ठाः |
| 29 | 5 | दशलक्षम् |
| 38 | 6 | आवाहना |
| 38 | 7 | तथाऽऽचामो |
| 41 | 4 | अन्यानप्यु |
| 43 | 14 | स्वनामधेय |
| 46 | 11 | तमायात |
| 49 | 9 | साधर्म्यान्म |
| 51 | 2 | स तु शैवं |
| 51 | 9 | तत्तद्द्रव्य |

| पृष्ठम् | पङ्क्तिः | पठनीयः पाठः |
|---|---|---|
| 56 | 9 | लक्षचन्ना |
| 59 | 4 | यथर्तुं |
| 59 | 5 | उच्छूनतां |
| 60 | 18 | व्रजेत् |
| 64 | 17 | युवती |
| 69 | 4 | पुनर्माला |
| 70 | 12 | नवसे |
| 71 | 3 | पाशमुद्गर |
| 71 | 10 | शलाकाश्च |
| 89 | 16 | हा ! कष्टं |
| 90 | 11 | द्रव्याभिला |
| 91 | 10 | कः श्रिया |
| 97 | 6 | सत्त्वं रज |
| 97 | 12 | गुणतत्त्वं |
| 107 | 8 | अशुद्धाध्व |
| 107 | 9 | मोहश्चेत्यमी |
| 107 | 15 | शैवदीक्षयैव |
| 119 | 4 | तु द्व्यणु |
| 120 | 18 | यथार्थानु |
| 126 | 7 | शुभाऽऽगमः |
| 132 | 14 | चैकाग्र्यं |
| 132 | 15 | वृत्त्या |
| 132 | 17 | स्वंपदे |
| 136 | 15 | वाच्यं तु |
| 139 | 8 | स्वाभाविकी |

| पुटम् | पङ्क्तिः | पठनीयः पाठः |
|---|---|---|
| 144 | 13 | स्थिताः |
| 151 | 15 | तान्यष्टावि |
| 173 | 3 | गृह्णीयाद्‌तु |
| 173 | 17 | मष्टमीं |

—o—

# LIST OF BOOKS

## मैसूरु प्राच्यविद्यासंशोधनालये
## परिष्कृत्य प्रकाशितानां संस्कृतग्रन्थानां
## सूचनी

प्राच्यविद्यासंशोधनालयः

मैसूरु विश्वविद्यानिलयः

मैसूरु

ORIENTAL RESEARCH INSTITUTE

MYSORE

1984

## मैसूरु विश्वविद्यानिलय-प्राच्यविद्यासंशोधनालये परिष्कृत्य प्रकाशिताः विक्रय्यसंस्कृतग्रन्थाः

—o—

| मालाङ्काः | ग्रन्थनामानि | मूल्यम्–रू. | पै. |
|---|---|---|---|
| 1* | आपस्तम्बगृह्यसूत्रम् सुदर्शनाचार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम् | 1 | 75 |
| 2* | आपस्तम्बयज्ञपरिभाषासूत्रम् हरदत्त—कपर्दिस्वामिभाष्याभ्यां सहितम् | 1 | 00 |
| 3* | माधवीया धातुवृत्तिः (अदादि दिवादि जुहोत्यादयः) (द्वितीयसम्पुटे प्रथमभागः) | 2 | 00 |
| 4* | तैत्तिरीयसंहिता सस्वरचिह्ना, सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च (प्रथमं सम्पुटम्) | 2 | 50 |
| 5* | तैत्तिरीयसंहिता सस्वरचिह्ना सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च (द्वितीयं सम्पुटम्) | 2 | 50 |
| 6* | दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् | 1 | 25 |
| 7* | तैत्तिरीयसंहिता (तृतीयं सम्पुटम्) | 3 | 00 |
| 8* | श्रीमद्भगवद्गीता, श्रीशङ्कराचार्यविरचितभाष्यसहिता | 2 | 75 |
| 9* | तैत्तिरीयसंहिता (चतुर्थं सम्पुटम्) | 3 | 00 |
| 10* | मण्डलब्राह्मणोपनिषत् शङ्कराचार्यरचितराजयोगभाष्यसहिता | 1 | 00 |
| 11* | सौन्दर्यलहरी शङ्कराचार्यरचिता, लक्ष्मीधराचार्यकृतव्याख्यासहिता, भास्कराचार्यरचितभाष्यसहितभावनोपनिषदा, कालिदासकृतया पञ्चस्तव्या च सहिता | 1 | 00 |

---

* एतच्चिह्नाङ्किताः ग्रन्थाः समाप्तमुद्रणाः संप्रति विक्रयायात्र नोपलभ्यन्ते।

| | | | |
|---|---|---|---|
| 12* | तैत्तिरीयसंहिता (पञ्चमं सम्पुटम्) | 3 | 00 |
| 13* | तैत्तिरीयसंहिता (षष्ठं सम्पुटम्) | 4 | 00 |
| 14* | तैत्तिरीयसंहिता (सप्तमं सम्पुटम्) | 3 | 00 |
| 15* | आपस्तम्बधर्मसूत्रम् हरदत्ताचार्यप्रणीतया उज्ज्वलाख्य-वृत्त्या सहितम् | 1 | 75 |
| 16* | तैत्तिरीयसंहिता (अष्टमं सम्पुटम्) | 3 | 00 |
| 17* | तैत्तिरीयसंहिता (नवमं सम्पुटम्) | 2 | 25 |
| 18* | तैत्तिरीयसंहिता (दशमं सम्पुटम्) | 1 | 25 |
| 19* | श्रीशङ्कराचार्यप्रबन्धावली (विष्णुसहस्रनामभाष्यम्, सनत्सुजातीयभाष्यं च) (प्रथमं सम्पुटम्) | 1 | 25 |
| 20* | श्रीशङ्कराचार्यप्रबन्धावली (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च व्याख्यासहिताः) द्वितीयं सम्पुटम्) | 1 | 25 |
| 21* | श्रीशङ्कराचार्यप्रबन्धावली (उपदेशसाहस्री गद्यपद्योभयात्मिका रामतीर्थव्याख्यायुता) (तृतीयं सम्पुटम्) | 2 | 00 |
| 22* | श्रीशङ्कराचार्यप्रबन्धावली (आत्मबोधः, विवेकचूडामणिः, वाक्यवृत्तिः, स्वात्मनिरूपणम्, योगतारावली, सर्वसिद्धान्तसारसङ्ग्रहश्च) (चतुर्थं सम्पुटम्) | 1 | 00 |
| 23* | माधवीया धातुवृत्तिः भ्वादौ प्रथमभागः (प्रथमभागे प्रथमं सम्पुटम्) | 2 | 00 |
| 24* | माधवीया धातुवृत्तिः भ्वादौ द्वितीयभागः (प्रथमभागे द्वितीयं सम्पुटम्) | | |
| 25* | गोत्रप्रवरनिबन्धकदम्बम् | 2 | 00 |
| 26* | तैत्तिरीयारण्यकम् भट्टभास्करीयभाष्यसहितम् (प्रथमं सम्पुटम्) | 1 | 75 |

| | | | |
|---|---|---|---|
| 27* | तैत्तिरीयारण्यकम् भट्टभास्करीयभाष्यसहितम् (द्वितीयं सम्पुटम्) | 1 | 00 |
| 28* | एकाग्निकाण्डः हरदत्तीयभाष्यसहितः | 1 | 25 |
| 29* | तैत्तिरीयारण्यकम् भट्टभास्करीयभाष्यसहितम् (तृतीयं सम्पुटम्) | 1 | 00 |
| 30* | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता | 2 | 00 |
| 31* | माधवीया धातुवृत्तिः स्वादिमारभ्य समग्रा (द्वितीयभागे द्वितीयं सम्पुटम्) | 2 | 00 |
| 32* | बोधायनगृह्यसूत्रम् सपरिशिष्टम् | 2 | 25 |
| 33* | तैत्तिरीयप्रातिशाख्यम् (वैदिकाभरण-त्रिभाष्यरत्नाख्य व्याख्याद्वययुतम्) | 4 | 00 |
| 34* | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमेतम् | 3 | 00 |
| 35* | भाट्टदीपिका खण्डदेवकृता (प्रथमं सम्पुटम्) | 3 | 00 |
| 36* | तैत्तिरीयब्राह्मणम् भट्टभास्करभाष्यसहितम् (प्रथमाष्टकम्) | 3 | 50 |
| 37* | कौटलीयं अर्थशास्त्रम् (प्रथममुद्रणम्) | 3 | 00 |
| 38* | तैत्तिरीयब्राह्मणम् भट्टभास्करभाष्यसहितम् (तृतीयाष्टके प्रथमभागः) | 3 | 50 |
| 39* | श्रीमद्ब्रह्मसूत्रभाष्यम् आनन्दतीर्थीयम् तत्त्वप्रकाशिका चन्द्रिका प्रकाशसहितम् (प्रथमं सम्पुटम्) | 3 | 00 |
| 40* | भाट्टदीपिका खण्डदेवरचिता (द्वितीयं सम्पुटम्) | 3 | 00 |
| 41* | खादिरगृह्यसूत्रम् रुद्रस्कन्दीयवृत्तिसहितम् | 1 | 00 |
| 42* | तैत्तिरीयब्राह्मणम् भट्टभास्करभाष्यसहितम् (तृतीयाष्टके द्वितीयभागः) | 2 | 25 |
| 43* | स्मृतिचन्द्रिका-याज्ञिकदेवणभट्टकृता (संस्कारकाण्डः) | 1 | 50 |
| 44* | ,, (आह्निककाण्डः) | 2 | 50 |

| | | | |
|---|---|---|---|
| 45* | स्मृतिचन्द्रिका—याज्ञिकदेवणभट्टकृता (व्यवहारकाण्डे प्रथमं सम्पुटम्) | 2 | 00 |
| 46* | भाट्टदीपिका खण्डदेवविरचिता (तृतीयं सम्पुटम्) | 2 | 50 |
| 47* | श्रीमद्ब्रह्मसूत्रभाष्यम् आनन्दतीर्थीयम् तत्त्वप्रकाशिका चन्द्रिका प्रकाशसहितम् (द्वितीयं सम्पुटम्) | 3 | 00 |
| 48* | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता (व्यवहारकाण्डे द्वितीयं सम्पुटम्) | 3 | 00 |
| 49* | भाट्टदीपिका खण्डदेवविरचिता (चतुर्थं सम्पुटम्) | 3 | 00 |
| 50* | गौतमधर्मसूत्रम् मस्करिभाष्यसहितम् | 3 | 75 |
| 51* | अलङ्कारमणिहारः (प्रथमं सम्पुटम्) | 3 | 00 |
| 52* | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता (श्राद्धकाण्डः) | 3 | 25 |
| 53* | श्रीमद्ब्रह्मसूत्रभाष्यम् आनन्दतीर्थीयम् तत्त्वप्रकाशिका चन्द्रिका प्रकाशसहितम् (तृतीयं सम्पुटम्) | 4 | 00 |
| 54* | कौटलीयं अर्थशास्त्रम् (द्वितीयं मुद्रणम्) | 3 | 00 |
| 55* | बोधायनगृह्यसूत्रम् सपरिशिष्टम् (द्वितीय मुद्रणम्) | 2 | 25 |
| 56* | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता (आशौचकाण्डः) | 1 | 50 |
| 57* | तैत्तिरीयब्राह्मणम् भट्टभास्करीय सायणीय भाष्याभ्यां युतम् (द्वितीयाष्टकम्) | 3 | 50 |
| 58* | अलङ्कारमणिहारः (द्वितीयं सम्पुटम्) | 3 | 50 |
| 59* | श्रीमद्ब्रह्मसूत्रभाष्यम् आनन्दतीर्थीयम् तत्त्वप्रकाशिका चन्द्रिका प्रकाशयुतम् (चतुर्थं सम्पुटम्) | 3 | 50 |
| 60* | काव्यप्रकाशः मम्मटभट्टकृतः माणिक्यचन्द्रकृतसङ्केत-टीकायुतः | 3 | 50 |
| 61* | आयुर्वेदसूत्रम् योगानन्दनाथभाष्यसहितम् | 2 | 00 |
| 62* | अलङ्कारमणिहारः (तृतीयं सम्पुटम्) | 2 | 50 |

| | | | |
|---|---|---|---|
| 63* | विद्यामाधवीयम् विष्णुशर्मकृतमुहूर्तदीपिकायुतम् (प्रथमं सम्पुटम् ) | 2 | 00 |
| 64* | कौटलीयं अर्थशास्त्रम् (तृतीयं मुद्रणम् ) | 3 | 00 |
| 65* | अर्थशास्त्रपदसूची (प्रथमं सम्पुटम् ) | 2 | 50 |
| 66* | ,, (द्वितीयं ,, ) | 2 | 50 |
| 67* | विद्यामाधवीयम् विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् द्वितीयं संपुटम् ) | 2 | 00 |
| 68* | अर्थशास्त्रपदसूची (तृतीयं संपुटम् ) | 2 | 00 |
| 69* | अभिलषितार्थचिन्तामणिः (प्रथमं संपुटम् ) | 2 | 00 |
| 70* | विद्यामाधवीयम् विष्णुशर्मकृतमुहूर्तदीपिका टीकायुतम् (तृतीयं संपुटम् ) | 1 | 50 |
| 71 | सरस्वतीविलासः (व्यवहारकाण्डः) | 2 | 50 |
| 72 | अलङ्कारमणिहारः (चतुर्थं संपुटम् ) | 2 | 25 |
| 73* | तर्कताण्डवम् व्यासयतिकृतम् न्यायदीपाख्यव्याख्या-युतम् (प्रथमं संपुटम् ) | 3 | 00 |
| 74 | आपस्तम्बशुल्बसूत्रम् कपर्दीय करविन्दीय सुन्दर-राजीयव्याख्याभिः सहितम् | 2 | 75 |
| 75* | अद्वैतसिद्धिः मधुसूदनसरस्वतीकृता गुरुचन्द्रिकाटीकायुता (प्रथमं संपुटम् ) | 3 | 75 |
| 76* | तत्त्वमुक्ताकलापः वेदान्ताचार्यकृतः स्वोपज्ञसर्वार्थसिद्धि तद्व्याख्याऽऽनन्ददायिनीभावप्रकाशाभ्यां युतः (प्रथमं संपुटम् ) | 4 | 00 |
| 77* | तर्कताण्डवम् व्यासयतिकृतम् न्यायदीपाख्य व्याख्या-युतम् (द्वितीयं संपुटम् ) | 2 | 00 |

| | | | |
|---|---|---|---|
| 78* | अद्वैतसिद्धिः मधुसूदनसरस्वतीकृता गुरुचन्द्रिकाटीकायुता द्वितीयं संपुटम् ) | 3 | 25 |
| 79* | तर्कताण्डवम् व्यासयतिकृतम् न्यायदीपाख्य व्याख्या-युतम् (तृतीयं संपुटम् ) | 2 | 00 |
| 80* | अद्वैतसिद्धिः मधुसूदनसरस्वतीकृता गुरुचन्द्रिकाटीकायुता (तृतीयं संपुटम् ) | 2 | 25 |
| 81* | तत्त्वमुक्ताकलापः वेदान्ताचार्यकृतः स्वोपज्ञसर्वार्थसिद्धि तद्व्याख्याऽऽनन्ददायिनीभावप्रकाशाभ्यां सहितः (द्वितीयं संपुटम् ) | 3 | 00 |
| 82 | तर्कताण्डवम् व्यासयतिकृतम् न्यायदीपाख्यव्याख्या-युतम् (चतुर्थं संपुटम् ) | 2 | 25 |
| 83 | वाक्यार्थरत्नम् सुवर्णमुद्रिकाव्याख्यासहितम् | 1 | 00 |
| 84 | तत्त्वार्थसूत्रम् श्रीमदुमास्वामिरचितम् सुखबोधाख्यवृत्ति-युतम् | 2 | 25 |
| 85* | सौन्दर्यलहरी शङ्कराचार्यरचिता लक्ष्मीधराचार्यरचित व्याख्यानयुता भास्कराचार्यरचितभाष्यसहित भावनोप-निषदा, कालिदासकृतपञ्चस्तव्या च सहिता (द्वितीयं मुद्रणम् ) | 2 | 50 |
| 86* | यादवाभ्युदयम् वेदान्तदेशिकविरचितम् अप्पयदीक्षित-विरचितव्याख्यायुतम् (प्रथमं संपुटम् ) | 3 | 25 |
| 87* | आपस्तम्बश्रौतसूत्रम् रामाग्निचिद्वृत्तिसहितधूर्तस्वामि-भाष्यसहितम् (प्रथमं संपुटम् ) | 4 | 00 |
| 88 | प्रमेयरत्नालङ्कारः अभिनवचारुकीर्तिपण्डिताचार्यविरचितः | 2 | 75 |
| 89* | यादवाभ्युदयम् वेदान्तदेशिकविरचितम् अप्पयदीक्षित-विरचितव्याख्यायुतम् (द्वितीयं संपुटम् ) | 5 | 00 |

| | | | |
|---|---|---|---|
| 90 | शैवपरिभाषा शिवाग्रयोगिरचिता | 3 | 00 |
| 91* | सौन्दर्यलहरी (तृतीयं मुद्रणम्) | 3 | 00 |
| 92 | प्राकृतमणिदीपः अप्पयदीक्षितप्रणीतः (प्रथमं संपुटम्) | 6 | 25 |
| 93 | आपस्तम्बश्रौतसूत्रम् वृत्तिभाष्यभूषितम् (द्वितीयं संपुटम्) | 8 | 50 |
| 94 | तत्त्वमुक्ताकलापः सव्याख्यः (तृतीयं संपुटम्) | 6 | 75 |
| 95 | क्रियासारः-नीलकण्ठशिवाचार्यरचितः (प्रथमं संपुटम्) | 5 | 50 |
| 96 | वेदान्ततत्त्वविवेकः श्रीनृसिंहाश्रमिरचितः सव्याख्यः | 15 | 00 |
| 97 | तत्त्वमुक्ताकलापः सव्याख्यः (चतुर्थं संपुटम्) | 6 | 00 |
| 98 | नीतिसूत्राणि बृहस्पति चाणक्य सोमदेवैः विरचितानि, अर्थशास्त्रसङ्ग्रहश्च | 2 | 75 |
| 99 | क्रियासारः नीलकण्ठशिवाचार्यरचितः (द्वितीयं संपुटम्) | 6 | 00 |
| 100 | ,, ,, (तृतीयं संपुटम्) | 5 | 00 |
| 101 | सेवन्तिकापरिणयं नाटकम् चोक्कनाथविरचितम् | 2 | 25 |
| 102 | वाल्मीकिरामायणम् माधवयोगिरचितया अमृतकतकव्याख्यया युतम् बालकाण्डः (प्रथमं संपुटम्) | 5 | 50 |
| 103* | कौटलीयं अर्थशास्त्रम् (परिष्कृताभिनवमुद्रणम्) | 14 | 00 |
| 104 | आपस्तम्बश्रौतसूत्रम् वृत्तिभाष्यसहितम् (तृतीयं संपुटम्) | 10 | 00 |
| 105 | विष्णुसहस्रनामस्तोत्रम् नामावली शङ्करभाष्यार्थसङ्ग्रहपद्यप्रसूनाञ्जलिभिः सहितम् | 4 | 00 |
| 106 | विष्णुसहस्रनामस्तोत्रम् तारकब्रह्मानन्दसरस्वतीयविवृतिसमेत शाङ्करभाष्यसहितम् | 13 | 25 |
| 107 | वाल्मीकिरामायणम् अमृतकतकव्याख्यायुतम् अयोध्याकाण्डे प्रथमभागः (द्वितीयं संपुटम्) | 5 | 50 |

| | | | |
|---|---|---|---|
| 108 | शिवतत्त्वरत्नाकरः केलदि बसवभूपालरचितः (प्रथमं संपुटम्) | 9 | 75 |
| 109 | सिद्धान्तसिद्धाञ्जनम् कृष्णानन्दसरस्वतीविरचितम् भास्करदीक्षितकृतरत्नतूलिकाव्याख्यायुतम् (प्रथमं संपुटम्) | 11 | 00 |
| 110 | वाल्मीकिरामायणम् अमृतकतकव्याख्यायुतम् अरण्यकाण्डः (चतुर्थं संपुटम्) | 9 | 70 |
| 111 | वाल्मीकिरामायणम् अमृतकतकव्याख्यायुतम् अयोध्याकाण्डे द्वितीयभागः (तृतीयं संपुटम्) | 11 | 75 |
| 112 | शिवतत्त्वरत्नाकरः केलदिबसवभूपालविरचितः (द्वितीयं संपुटम्) | 30 | 00 |
| 113 | अद्वयतारकोपनिषत् अप्पयशिवाचार्यकृतभाष्ययुता | 00 | 35 |
| 114 | सौन्दर्यलहरी शङ्कराचार्यविरचिता लक्ष्मीधरविरचितया व्याख्यया, कर्णाटकभाषानुवादेन, भास्करभाष्यसहितभावनोपनिषदा, पञ्चस्तव्या च सहिता (परिष्कृतं चतुर्थं मुद्रणम्) | 7 | 00 |
| 115 | मण्डलब्राह्मणोपनिषत् शङ्कराचार्यविरचितराजयोगभाष्येण, अप्पयशिवाचार्यभाष्येण, सव्याख्ययोगतारावल्या च सहिता (परिष्कृतं द्वितीयं मुद्रणम्) | 3 | 75 |
| 116 | न्यायमञ्जरी जयन्तभट्टविरचिता टिप्पणीसहिता (प्रथमं संपुटम्) | 42 | 00 |
| 117 | पञ्चदशाङ्गयोगप्रकरणम् अप्पयशिवाचार्यकृतम् | 2 | 00 |
| 118 | दक्षिणामूर्तिस्तोत्रम् सुरेश्वराचार्यकृतटीकया, कर्णाटकभाषानुवादेन च सहितम् (परिष्कृतं द्वितीयं मुद्रणम्) | 10 | 25 |
| 119 | वाल्मीकिरामायणम् अमृतकतकव्याख्यायुतम् किष्किन्धाकाण्डः (पञ्चमं संपुटम्) | 17 | 00 |

| | | | |
|---|---|---|---|
| 120 | काव्यप्रकाशः मम्मटभट्टकृतः माणिक्यचन्द्रकृतसङ्केतटीकया, रविपाणिभट्टाचार्यकृतमधुमतीटीकया च सहितः (प्रथमो भागः) | 10 | 00 |
| 121 | कविकर्णरसायनम् महाकविषडक्षरीशरचितम् वेङ्कनसुधीविरचितसाहित्यसुधोदयव्याख्यासमलङ्कृतम् | 20 | 75 |
| 122 | काव्यप्रकाशः सङ्केत मधुमतीभ्यां सहितः (द्वितीयो भागः) | 12 | 00 |
| 123 | श्रीकरभाष्यम् श्रीपतिपण्डितविरचितम् (प्रथमो भागः) | 35 | 50 |
| 124 | वर्णनात्मक लिखितग्रन्थसूची (Vol. I) | 40 | 00 |
| 125 | श्रीकरभाष्यम् श्रीपतिपण्डितविरचितम् (द्वितीयो भागः) | 35 | 50 |
| 126 | वर्णनात्मक लिखितग्रन्थसूची (Vol. II) | 40 | 00 |
| 127 | ,, ,, (Vol. III) | 40 | 00 |
| 128 | ,, ,, (Vol. IV-a) | 40 | 00 |
| 129 | ,, ,, (Vol. V) | 40 | 00 |
| 130 | हृदयामृतम् जगन्नाथपण्डितविरचितम् | 10 | 50 |
| 131 | गीतराघवम् रामकविविरचितम् | 9 | 50 |
| 132 | वर्णनात्मक लिखितग्रन्थसूची (Vol. VI) | 40 | 00 |
| 133 | शिवलिङ्गसूर्योदयः मल्लनार्यविरचितः | 10 | 00 |
| 134 | साङ्ख्यदर्शनम् श्रीधराचार्यविरचित साङ्ख्यदीपिकाख्यया वृत्त्या, सव्याख्यसाङ्ख्यकारिकया च समलङ्कृतम् | 38 | 00 |
| 135 | वर्णनात्मक लिखितग्रन्थसूची (Vol. VIII) | 40 | 00 |
| 136 | ब्रह्मसूत्रवृत्तिः प्रौढदेवरायविरचिता | 25 | 00 |
| 137 | अनुभवसूत्रम् | 8 | 00 |
| 138 | वातुलशुद्धागमः सव्याख्यः (द्वितीयो भागः) | 23 | 00 |

| | | | |
|---|---|---|---|
| 139 | न्यायमञ्जरी जयन्तभट्टविरचिता (द्वितीयोभागः) | 50 | 00 |
| 140 | वर्णनात्मकलिखितग्रन्थसूची (Vol. IX) | 40 | 00 |
| 141 | बोधायनगृह्यसूत्रम् (द्वितीयं मुद्रणम्) | 32 | 00 |
| 142 | श्रीमद्ब्रह्मसूत्रभष्यम् सानन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिकाप्रकाशसहितम्, प्रथमं सम्पुटम् (द्वितीयं मुद्रणम्) | 25 | 00 |
| 143 | वर्णनात्मकलिखितग्रन्थसूची (Vol. IV. b) | 110 | 00 |
| 144 | ,, (Vol. X) | 125 | 00 |
| 145 | योगशतकम् सव्याख्यम् | .... | .... |
| 146 | रघुनाथविजयम् सव्याख्यम् | .... | .... |
| 147 | वातुलशुद्धागमः सव्याख्यः प्रथमो भागः | .... | .... |
| 148 | शिवतत्त्वरत्नाकरः (तृतीयं सम्पुटम्) | .... | .... |
| 149 | माधवीया धातुवृत्तिः प्रथमं संपुटम् (द्वितीयमुद्रणम्) | 21 | 00 |

—o—

## प्रकीर्णकाः

—o—

| | | | |
|---|---|---|---|
| 1 | मैसूरु प्राच्यकोशागारस्थलिखितग्रन्थसूचनी सविवरणा (प्रथमो भागः) | 3 | 75 |
| 2 | मैसूरु प्राच्यकोशागारस्थलिखितग्रन्थसूचनी सविवरणा (द्वितीयो भागः) | 1 | 25 |
| 3 | मैसूरु प्राच्यकोशागारस्थलिखितग्रन्थसूचनी सविवरणा (तृतीयो भागः) | 90 | 00 |
| 4* | मैसूरु प्राच्यकोशागारस्थ लिखितग्रन्थसूचनी | 2 | 50 |
| 5* | मैसूरु प्राच्यकोशागारस्थ लिखितग्रन्थसूचनी अनुबन्धः (1) | 0 | 75 |
| 6* | ,, ,, ,, अनुबन्धः (2) | 0 | 75 |
| 7* | ,, ,, ,, अनुबन्धः (3) | 0 | 75 |
| 8 | मैसूरु प्राच्यकोशागारस्थ मुद्रितपुस्तकसूचनी (प्रथमो भागः) | 2 | 75 |
| 9 | मैसूरु प्राच्यकोशागारस्थ मुद्रितपुस्तकसूचनी अनुबन्धः (द्वितीयो भागः) | 1 | 25 |
| 10 | सीतारावणसंवादझरी चामराजनगरं रामशास्त्रिविरचिता (प्रथमो भागः) | 1 | 25 |
| 11 | सीतारावणसंवादझरी चामराजनगरं रामशास्त्रिविरचिता (द्वितीयो भागः) | 1 | 00 |
| 12 | सावित्रीपरिणयचम्पूः | 1 | 50 |

| | | | |
|---|---|---|---|
| 13 | पातञ्जलयोगसूत्रम् सव्याख्यम् | 0 | 25 |
| 14 | हठयोगप्रदीपिका | 0 | 25 |
| 15 | हंससन्देशः वेदान्तदेशिककृतः सव्याख्यः | 3 | 50 |

—o—

## मुद्रणाय प्रेषिताः यन्त्रस्थाः ग्रन्थाः

—o—

1 कौटलीयं अर्थशास्त्रम् परिष्कृतं अभिनवं पञ्चमं मुद्रणम् ।

2 सिद्धान्तसिद्धाञ्जनम् कृष्णानन्दसरस्वतीविरचितम् भास्करदीक्षित-कृतरत्नतूलिकाव्याख्यायुतम् । (द्वितीयो भागः) ।

3 पञ्चतन्त्रसङ्ग्रहः ।

4 अणुभाष्यटीका छलारी शेषाचार्यैरचिता ।

5 वर्णनात्मकलिखितग्रन्थसूची (Vol. VII. Part–I) ।

6 श्रीमद्ब्रह्मसूत्रभाष्यम् द्वितीयं संपुटम् (द्वितीयं मुद्रणम्) ।

7 तर्कताण्डवम् प्रथमं संपुटम् (द्वितीयं मुद्रणम्) ।

8 वृत्तरत्नावलिः ।

9 सीताकल्याणवीथी वेङ्कामात्यः ।

10 वीरराघवव्यायोगः ,, ।

11 वीरागमः (प्रथमो भागः) ।

12 ,, (द्वितीयो भागः) ।

13 शैवरत्नाकरः ज्योतिर्नाथः ।

14 आपस्तम्बश्रौतसूत्रम् (तृतीयो भागः) ।

15 शिवनामकल्पलतालवालसुधापूरः वेङ्कटाचलीयः ।

16 त्रिवेणिका—आशाधरः ।

17 ವಾತುಲಶುದ್ಧಾಗಮ ಕನ್ನಡಾನುವಾದ ಸಹಿತ (ಸಮಗ್ರ).

—o—

## मुद्रणाय सज्जीक्रियमाणाः ग्रन्थाः

—o—

1 तर्कसङ्ग्रहदीपिका महाचार्यकृततत्त्वार्थदीपिकाव्याख्यासमलङ्कृता ।

2 काव्यदर्पणः श्रीराजचूडामणिदीक्षितविरचितः ।

3 सिद्धान्तशिखामणिः शिवयोगिविरचितः ।

4 पुराणसारः माधवाचार्यकृतः ।

5 वैयाकरणसिद्धान्तसङ्ग्रहः दत्तरामभट्टकृतः ।

6 वीरभद्रविजयचम्पूः एकाम्रयज्वविरचिता ।

7 एकोत्तरशतस्थलम् जक्कणाचार्यकृतम् ।

8 विवेकचिन्तामणिः शिवयोगिविरचितः ।

9 बसवराजीयम् पाल्कुरिके सोमनाथकृतम् ।

10 सारस्वतव्याकरणटीका चेन्नवीरकविकृता ।

11 वीरमाहेश्वराचारसङ्ग्रहः नीलकण्ठनागनाथाचार्यकृतः कर्णाटकव्याख्यायुतः ।

12 पातञ्जलयोगसूत्रम् नारायणतीर्थविरचितभाष्यसमलङ्कृतम् ।

13 तत्त्वोद्योतः आनन्दतीर्थविरचितः पद्मनाभतीर्थीयव्याख्यायुतः ।

14 वाल्मीकिरामायणम् अमृतकतकव्याख्यायुतम् (सुन्दरकाण्डः) ।

15 ,, ,, (युद्धकाण्डः) ।

16 ,, ,, (उत्तरकाण्डः) ।

17 अलङ्कारराघवम् यज्ञेश्वरदीक्षितः ।

18 नीतिशतकम् श्रीनिवासविरचितम् ।

19 न्यायसूत्रनिबन्धः गम्भीरवंशजविरचितः ।

20 कुशलवचम्पूः वेङ्कामात्यः ।

21 लक्ष्मीस्वयंवरसमवकारः वेङ्कामात्यः ।

22 आर्योल्लासः वेङ्कटाचलः ।

23 वैभाषिककोशः कृष्णकविविरचितः ।

24 संख्यारत्नमाला ।

25 कूपशास्त्रम् जलमूलविज्ञानम् ।

26 विद्यामाधवीयम् Vol. I (द्वितीयं मुद्रणम्) ।

—o—